# काव्यनाटकनवनीतम् ।

and

# कादम्बरीकथासारः ।

The author and publisher:-

Purohit Umayashanker Kalidas, B. A.



Book-sellers:-

PUROHIT BROTHERS AND CO.
Circle Chowk-*JUNAGADH.*
(Kathiawar).

First Edition. Copies 2000

1939.

Price-Fourteen Annas only.

# PREFACE.

In English we have the Lamb's Tales and such other books which epitomise the writings of their standard authors; but in Sanskrit, although we meet with interesting passages from Sanskrit Literature here and there, I do not think that any systematic effort has been made to epitomise Sanskrit dramas and other writings of Sanskrit authors by any person. Of course we have the कादम्बरीसार, but the story there is of unusual length.

To remedy this I have tried in this book to epitomise the writings of a few Sanskrit authors in their own words. I hope this book which is meant for Sts. VI and VII will be greatly helpful to the candidates for the Matriculation Examination as the University of Bombay, nowadays,

prescribes passages from standard Sanskrit authors and an extra passage carrying twenty marks is invariably from the high class literature In the Reports on the work of examinees at the Matriculation Examination of April 1938, the examiners suggest that 'teachers of Sanskrit in High School should try to create in their pupils love for extra reading by actually doing with them in the class extra-passages, which should be at least as wide in extent as those that are prescribed ' I think this book will supply the need

I am very grateful to Mr I H M Abraham, the Chief Educational Officer, Junagadh State, who kindly sanctioned my book even before it was printed and to Mr B H Naik, the Head Master Bahadurkhanji High School, Junagadh, who has always been encouraging me in my efforts in this direction

Junagadh,
21st May, 1939

Purohit
Umayashanker Kalidas

अथ

# काव्यनाटकनवनीतम् ।

## शबर्याश्रमः ।

त्यक्त्वा तद्विपिनं घोरं सिंहव्याघ्रादिदूषितम् ।
शनैः प्रापाश्रमपदं शबर्या रघुनन्दनः ॥१॥
शबरी राममालोक्य लक्ष्मणेन समन्वितम् ।
आयान्तमाराद्धर्षेण प्रत्युत्थायाचिरेण सा ॥२॥
पतित्वा पादयोरग्रे हर्षपूर्णाश्रुलोचना ।
स्वागतेनाभिनन्द्याथ स्वासने संन्यवेशयत् ॥३॥
रामलक्ष्मणयोः सम्यक्पादौ प्रक्षाल्य भक्तितः ।
तज्जलेनाभिषिच्याङ्गमथार्घ्यादिभिरादृता ॥४॥
संपूज्य विधिवद्रामं ससौमित्रिं सपर्यया ।
संगृहीतानि दिव्यानि रामार्थं शबरी मुदा ॥५॥
फलान्यमृतकल्पानि ददौ रामाय भक्तितः ।
पादौ संपूज्य कुसुमैः सुगन्धैः सानुलेपनैः ॥६॥
कृतातिथ्यं रघुश्रेष्ठमुपविष्टं सहानुजम् ।
शबरी भक्तिसंपन्ना प्राञ्जलिर्वाक्यमब्रवीत् ॥७॥
अत्राश्रमे रघुश्रेष्ठ गुरवो मे महर्षयः ।
स्थिताः शुश्रूषणं तेषां कुर्वती समुपस्थिता ॥८॥

बहुवर्षसहस्राणि गतास्ते ब्रह्मणः पदम् ।
गमिष्यन्तोऽब्रुवन्मां त्वं वसात्रैव समाहिता ॥९॥
रामो दाशरथी जातः परमात्मा सनातनः ।
राक्षसानां वधार्थाय ऋषीणां रक्षणाय च ॥१०॥
आगमिष्यति सैकाग्रध्याननिष्ठा स्थिरा भव ।
इदानीं चित्रकूटाद्रावाश्रमे वसति प्रभुः ॥११॥
यावदागमनं तस्य तावद्रक्ष कलेवरम् ।
दृष्ट्वैव राघवं दग्ध्वा देहं यास्यसि तत्पदम् ॥१२॥
तथैवाकरवं राम त्वद्ध्यानैकपरायणा ।
प्रतीक्ष्यागमनं तेऽद्य सफलं गुरुभाषितम् ॥१३॥
तव संदर्शनं राम गुरूणामपि मे नहि ।
कथं रामाद्य मे दृष्टस्त्वं मनोवागगोचरः ।
स्तोतुं न जाने देवेश किं करोमि प्रसीद मे ॥१४॥

श्रीराम उवाच ।

पुंस्त्वे स्त्रीत्वे विशेषो वा जातिनामाश्रमादयः ।
न कारणं मद्भजने भक्तिरेव हि कारणम् ॥१५॥
यज्ञदानतपोभिर्वा वेदाध्ययनकर्मभिः ।
नैव द्रष्टुमहं शक्यो मद्भक्तिविमुखैः सदा ॥१६॥
यस्मान्मद्भक्तियुक्ता त्वं ततोऽहं त्वामुपस्थितः ।
इतो मद्दर्शनान्मुक्तिस्तव नास्त्यत्र संशयः ॥१७॥

शबर्युवाच ।

अहमग्निं प्रवेक्ष्यामि तवाग्रे रघुनन्दन ।
यास्यामि भगवन् राम तव विष्णोः परं पदम् ॥१८॥
इति रामं समामन्त्र्य प्रविवेश हुताशनम् ।
क्षणान्निर्धूय सकलमविद्याकृतबन्धनम् ।
रामप्रसादाच्छबरी मोक्षं प्रापातिदुर्लभम् ॥१९॥(अध्यात्मरामायण)

Notes–विपिनम्-अरण्यम्, वनम्। (२) आरात् (ind.) from a distance. (४.) आदृता-respectful. (५)सपर्यया पूजया। (८) शुश्रूषणम्-सेवा.

---

### श्रीभासविरचितं

## स्वप्नवासवदत्तम्।

आसील्लावणकं नाम ग्रामः। तत्रोदयनो नाम वत्सानां राजा प्रतिवसति स्म। तस्यावन्तिराजपुत्री वासवदत्ता नाम पत्नी दृढमभिप्रेता। एकदा तस्मिन्राजनि मृगयानिष्क्रान्ते ग्रामदाहेन सा वासवदत्ता दग्धेति प्रकाशतां गता वार्ता। वस्तुतस्तु कालक्रमेण जगतः परिवर्तमाना चक्रारपंक्तिरिव गच्छति भाग्यपंक्तिरिति मन्यमानो नृपतेरमात्यो यौगंधरायणो नृपस्य शत्रोरारुणेः स्वदेशं परिपालयितुकामस्तां वासवदत्तामादाय, मगधराजस्य महाराजदर्शकस्य भगिन्याः पद्मावत्या हस्ते तां न्यासीकृतवान्।

अथैकदान्यप्रयोजनेन मगधराजनगरीं गतस्योदयनस्याभिजनविज्ञानवयोरूपं दृष्ट्वा, मगधराजेनात्मनो भगिनी पद्मावती तस्मै दत्ता। अत्रान्तरे नृपस्योदयनस्यापरोऽमात्यो रुमण्वान्महता बलसमुदयेनारुणिमभिघातयितुमुपयातः। ततः स नृप आत्मनः सैन्यबलेन, यौगंधरायणनीत्या बद्धसौहृदस्य मगधराजस्य च साहाय्येनारुणिं जितवान्। वत्सांश्च पुनर्लब्धवान्।

अथैकदावन्तिराजस्य महासेनस्य सकाशाद् वसुन्धरा नाम वासवदत्ताधात्री काञ्चुकीयश्चागताविति श्रुत्वा राज्ञी पद्मावती नृपमुदयनमुक्तवती—

पद्मावती—आर्यपुत्र, प्रियं मे ज्ञातिकुलस्य कुशलवृत्तान्तं श्रोतुम्।

राजा—अनुरूपमेतद् भवत्याभिहितं—वासवदत्तास्वजनो मे स्वजन इति। पद्मावति, आस्यताम्। किमिदानीं नास्यते।

पद्मावती— आर्यपुत्र किं मया सहोपविष्टम् एतौ जनौ द्रक्ष्यति।

राजा—कोऽत्र दोषः।

पद्मावती—आर्यपुत्रस्यापरः परिग्रह इत्युदासीनौ तौ भविष्यतः।

राजा—कलत्रदर्शनार्हं जनं कलत्रदर्शनात्परिहरतीति बहुदोषमुत्पादयति। तस्मादास्यताम्।

पद्मावती—यदार्यपुत्र आज्ञापयति। (ततः प्रविशति काञ्चुकीयो धात्री च)

काञ्चुकीयः—(उपेत्य) जयतु भर्ता। दिष्ट्या परैरपहृतं राज्यं पुनः प्रत्यानीतमिति। कुतः—

> कातरा येऽप्यशक्ता वा नोत्साहस्तेषु जायते।
> प्रायेण हि नरेन्द्रश्रीः सोत्साहैरेव भुज्यते ॥१॥

राजा—आर्य, सर्वमेतन्महासेनस्य प्रभावः। स राजा महासेनः कुशली।

काञ्चुकीयः—अथ किम्। कुशली महासेनः। इहापि सर्वगतं कुशलं पृच्छति। देव्या सन्देशमिहाभवती धात्री कथयिष्यति।

धात्री—जयतु भर्ता। अरोगा भट्टिनी भर्तारं सर्वगतं कुशलं पृच्छति।

राजा—सर्वगतं कुशलमिति। अम्ब, ईदृशं कुशलम्।

धात्री—मेदानीं मर्तातिमात्रं सन्तप्तुम्।

काञ्चुकीयः—धारयत्वार्यपुत्रः। उपरताऽप्यनुपरता महासेन पुत्र्येवमनुकम्प्यमानार्यपुत्रेण। अथवा—

> कः कं शक्तो रक्षितुं मृत्युकाले
> रज्जुच्छेदे के घटं धारयन्ति।
> एवं लोकस्तुल्यधर्मो वनानां
> काले काले छिद्यते रुह्यते च ॥२॥

राजा—आर्य, मा मैवं—

> महासेनस्य दुहिता शिष्या देवी च मे प्रिया।
> कथं सा न मया शक्या स्मर्तुं देहान्तरेष्वपि ॥३॥

धात्री—आह भट्टिनी। उपरता वासवदत्ता। मम वा महासेनस्य वा यादृशौ गोपालकपालकौ, तादृश एव त्वं प्रथममेवाभिप्रेतो जामातेति। एतन्निमित्तमुज्जयिनीमानीतः। अनग्निसाक्षिकं वीणाव्यपदेशेन दत्ता। आत्मनश्चपलतयानिर्वृत्तविवाहमंगल एव गतः। अथ चावाभ्यां तव च वासवदत्तायाश्च प्रतिकृतिं चित्रफलकायामालिख्य विवाहो निर्वृत्तः। एषा चित्रफलका तव सकाशं प्रेषिता। एतां प्रेक्ष्य निर्वृतो भव।

राजा—अहो अतिस्निग्धमनुरूपं चाभिहितं तत्रभवत्या।

पद्मावती—आर्यपुत्र, चित्रगतं गुरुजनं प्रेक्ष्याभिवादयितुमिच्छामि।

धात्री—पश्यतु पश्यतु भर्तृदारिका। (चित्रफलकां दर्शयति।)

पद्मावती—(दृष्ट्वात्मगतम्।) हम्, अतिसदृशी खल्वियमार्याया

आवन्तिकाया । (प्रकाशम्।) आर्यपुत्र, सदृशी खल्वियमार्याया ।

राजा—किं सदृशी । सैवेति मन्ये ।

पद्मावती--आर्यपुत्र, अस्या प्रतिकृत्या सदृशीहैव प्रतिवसति।

राजा--किं वासवदत्ताया । पद्मावती—आम् ।

राजा--तेन हि शीघ्रमानीयताम् ।

पद्मावती--आर्यपुत्र, मम कन्याभावे केनापि ब्राह्मणेन मम भगिनिकेति न्यासो निक्षिप्त । सा च प्रोषितभर्तृका परपुरुषदर्शनं परिहरति ।

राजा--यदि विप्रस्य भगिनी व्यक्तमन्या भविष्यति ।
परस्परगता लोके दृश्यते रूपतुल्यता ॥ (प्रविश्य ।)

प्रतिहारी-जयतु भर्ता । एष उज्जनीयो ब्राह्मणो, भर्तृदार्या हस्ते मम भगिनिकेति न्यासो निक्षिप्तस्त प्रतिग्रहीतु प्रतीहारमुपस्थित ।

राजा—पद्मावति, किन्नु स ब्राह्मण । पद्मावती--भवितव्यम् ।

राजा--शीघ्रं प्रवेश्यता स ब्राह्मण ।

प्रतीहारी--यद् भर्ताज्ञापयति । (निष्क्रान्ता ।)

राजा--पद्मावति, त्वमपि तामानय ।

पद्मावती-यदार्यपुत्र आज्ञापयति । (निष्क्रान्ता)

(तत प्रविशति यौगन्धरायण ।)

यौगंधरायण -(उपसृत्य) जयतु जयतु भवान् ।

राजा--श्रुतपूर्व इव स्वर । भो ब्राह्मण, किं भवत स्वसा पद्मावत्या हस्ते न्यास इति निक्षिप्ता ।

यौगन्धरायणः-अथ किम् ।

(ततः प्रविशति पद्मावत्यावन्तिकया सह ।)

पद्मावती—(उपसृत्य) जयत्वार्यपुत्र । एष न्यास ।

धात्री—(आवन्तिकां निर्वर्ण्य) अम्मो भर्तृदारिका वासवदत्ता ।

राजा-कथं महासेनपुत्री ।

यौगन्धरायणः-मम भगिनी खल्वेषा ।

राजा—भवतु पश्यामस्तावद् रूपसादृश्यम् । सक्षिप्यतां यवनिका ।

यौगन्धरायणः- जयतु स्वामी ।

वासवदत्ता—जयत्वार्यपुत्र ।

राजा—अये असौ यौगन्धरायण । इयं च महासेनपुत्री ।

पद्मावती—अहो आर्या खल्वियम् । आर्ये, सखीजनसमुदाचारेणाना नत्यातिक्रान्त समुदाचार । तच्छीर्षेण प्रसादयामि ।

वासवदत्ता (पद्मावतीमुत्थाप्य) उत्तिष्ठोत्तिष्ठाविधवे ।

यौगन्धरायणः—स्वामिन्, देव्यपनयेन कृतापराधः खल्वहम् । तत्क्षन्तुमर्हति स्वामी । (इति पादयो पतति ।)

राजा—(उत्थाप्य) वयस्य यौगन्धरायण, देव्यपनये का कृता तव बुद्धि ।

यौगन्धरायण —कौशाम्बीमात्रं परिपालयामीति ।

राजा—सखे, पश्य । भवता—

मिथ्योन्मादैश्च युद्धैश्च शास्त्रदृष्टैश्च मन्त्रितैः ।
भवद्यत्नैः खलु वयं मज्जमानाः समुद्धृता ॥

यौगन्धरायणः—स्वामिभाष्यानामनुगन्तारो वयम्। स्वामिन्, देव्या कुशलनिवेदनार्थमद्यैव प्रतिनिवर्ततामत्रभवान् रैभ्योऽत्र भवती च।

राजा—न, न। सर्वे एव वयं यास्यामो देव्या पद्मावत्या सह।

यौगन्धरायण—यदाज्ञापयति स्वामी। (निष्क्रान्ताः सर्वे।)

Notes—दृढमभिप्रेता–अतीवप्रिया। कालक्रमेण भाग्यपङ्क्ति—Compare with नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण। (मेघदूत) (१) प्रायेण भुज्यते—Compare with निवसन्ति पराक्रमाश्रया न विषादेन समं समृद्धयः। (किरातार्जुनीयम्।) चित्रफलका–A picture board. प्रोषितभर्तृका–नानाकार्यवशाद्यस्या दूरदेशं गतः पतिः। सा मनोभवदुःखार्ता भवेत्प्रोषितभर्तृका॥ A woman whose husband is abroad मिथ्योन्माद–A feign act of madness रैभ्य m. कञ्चुकी of महासेन

---

महाकविश्रीकालिदासविरचित

## मालविकाग्निमित्रम्।

विदर्भराजस्य यज्ञसेनस्य पितृव्यपुत्रः कुमारो माधवसेनः प्रतिश्रुतसम्बन्धो राज्ञोऽग्निमित्रस्योपान्तिकमुपसर्पन्नन्तरा विदर्भराजस्यान्तपालेनावस्कन्द्य गृहीतः। अतस्तस्योन्मूलनायाग्निमित्रेणात्मनो महिष्या धारिण्या वर्णावरस्य भ्रातुर्वीरसेनस्य सेनादिष्टा। तेन वीरसेनेन विदर्भनाथं वशीकृत्य बन्धनान्मोचितः कुमारो माधवसेनः। किन्तु तस्य कनीयसी भगिनी मालविका यदा दायादावशं गतो माधवसेनस्तदा तस्यामात्येनार्यसुमतिना

गूढमपनीता ।

ततः स सुमतिरग्निमित्रसम्बन्धाकाङ्क्षया तां तथागतभ्रातृकामादाय पथिकसार्थं विदिशागामिनमनुप्रविष्टः । किन्तु मार्गे सार्थवाहयोद्वारस्तस्करैः पराङ्मुखीकृता । मालविका परीप्सुः सुमतिश्च युद्धे हतः । ततः सा मालविकाऽऽटविकेभ्यो वीरसेनं, वीरसेनाच्चाग्निमित्रस्य महिषीं धारिणीं गता ।

अथैकदा चित्रगतायां देव्या धारिण्याः परिजनगतां तां मालविकां दृष्ट्वा राजाग्निमित्रस्तां चकमे । तस्याश्च दर्शनायोत्सुको बभूव । एकदा सुखोपविष्टं विदूषकं राजा तं विषयमुद्दिश्याब्रवीत् ।

राजा—वयस्य, कच्चिदुपेयोपायदर्शने व्यापृतं ते प्रज्ञाचक्षुः ।

विदूषकः—प्रयोगसिद्धिं पृच्छ । राजा—कथमिव ।

विदूषकः—(कर्णे ।) एवमिव ।

राजा—साधु वयस्य, निपुणमुपक्रान्तम् । इदानीं दुरधिगमसिद्धावप्यस्मिन्नारम्भे वयमाशंसामहे ।

(नेपथ्ये ।) अलमलं बहु विकत्थ्य । राज्ञः समक्षमेवावयोरधरोत्तरव्यक्तिर्भविष्यति ।

राजा—सखे, त्वत्सुनीतिपादपस्य कुसुममुद्भिन्नम् ।

विदूषकः—फलमपि द्रक्ष्यसि ।

(ततः प्रविशति कञ्चुकी ।)

कञ्चुकी—देव, एतौ हरदत्तगणदासौ । राजा—प्रवेशय तौ ।

कञ्चुकी—यदाज्ञापयति देवः । (इति निष्क्रम्य पुनस्ताभ्यां सह प्रविश्य ।)

इत इतो भवन्तौ।

हरदत्त —(राजानमवलोक्य।) अहो दुरासदो राजमहिमा।

गणदास —महत्खलु पुरुषाकारमिदं ज्योतिः।

कञ्चुकी—एष देवः। उपसर्पता भवन्तौ।

उभौ— (उपसृत्य।) विजयतां देवः।

राजा—स्वागतं भवद्भ्याम्। (परिजनं विलोक्य।) आसने तावदत्र भवतोः। (उभौ परिजनोपनीतयोरासनयोरुपविष्टौ।)

राजा—किमिदं शिष्योपदेशकाले युगपदाचार्ययोरुपस्थानम्।

गणदास—देव, श्रूयताम्। मया तीर्थादभिनयविद्या शिक्षिता। दत्तप्रयोगश्चास्मि। देवेन देव्या च परिगृहीतः।

राजा—इदं जाने। ततः किम्।

गणदास—सोऽहममुना हरदत्तेन प्रधानपुरुषसमक्षमयं न मे पादरजसापि तुल्य इत्यधिक्षिप्तः।

हरदत्त —देव, अयमेव मयि प्रथमं परिवादकरः। अत्रभवान् किल मम च समुद्रपल्वलयोरिवान्तरमिति। तदत्रभवानिमं मां च शास्त्रे प्रयोगे च विमृशतु। देव एव नौ विशेषज्ञः प्राश्निकः।

विदूषक—समर्थं प्रतिज्ञातम्।

गणदास.—प्रथमः कल्पः। अवहितो देवः श्रोतुमर्हति।

राजा—तिष्ठतु तावत्। पक्षपातमत्र देवी मन्यते। तत्तस्याः पण्डितकौशिक्या सहिताया समक्षमेव न्याय्यो व्यवहारः।

विदूषकः—सुष्ठु भवान् भणति।

आचार्यौ—यद्देवाय रोचते।

राजा—मौद्गल्य, अमुं प्रस्तावं निवेद्य, पण्डितकौशिक्या सार्धमाहूयतां देवी।

कञ्चुकी—यदाज्ञापयति देवः। (इति निष्क्रम्य, सपरिव्राजिकया देव्या सह प्रविश्य।) इत इतो देवी।

देवी—(परिव्राजिकां विलोक्य।) भगवति, हरदत्तस्य गणदासस्य च संरम्भे कथं पश्यसि।

परिव्राजिका—अलं स्वपक्षावसादशंकया। न परिहीयते प्रतिद्वन्द्विनो गणदासः। देवी-यद्यप्येवं तथापि राजपरिग्रहोऽस्य प्रधानत्वमुपहरति।

परिव्राजिका—अयि राज्ञीशब्दभाजनमात्मानमपि तावच्चिन्तयतु भवती।

विदूषकः—अविहा अविहा उपस्थिता पण्डितकौशिकीं पुरस्कृत्य देवी।

परिव्राजिका—(उपसृत्य।) विजयतां देवः।

राजा—भगवति, अभिवादये।

परिव्राजिका-महासारप्रसवयोः सदृशक्षमयोर्द्वयोः।
धारिणीभूतधारिण्योर्भव भर्ता शरच्छतम्॥१॥

देवी—जयत्वार्यपुत्रः।

राजा—स्वागतं देव्यै। (परिव्राजिकां विलोक्य।) भगवति, क्रियतामासनपरिग्रहः। (सर्वे यथार्हमुपविशन्ति।)

राजा—भगवति, अत्रभवतोर्हरदत्तगणदासयोः परस्परविज्ञानसंघर्षो

जात । तदत्रभगवत्या प्राश्निकपदमध्यासितव्यम् ।

परिव्राजिका—(सस्मितम् ।) अत्युपालम्भेन । पत्तने विद्यमानेऽपि ग्रामे रत्नपरीक्षा ।

राजा—मा मैवम् । पण्डितकौशिकी खलु भगवती । पक्षपातिनावनयोरहं च देवी च ।

आचार्यौ-सम्यगाह देवः । मध्यस्था भगवती गुणदोषौ न परिच्छेत्तुमर्हति ।

राजा-तेन हि प्रस्तूयतां विवादः ।

परिव्राजिका-देव, प्रयोगप्रधानं हि नाट्यशास्त्रम् । किमत्र वाग्व्यवहारेण ।

राजा—कथं वा देवी मन्यते ।

देवी-यदि मां पृच्छसि एतयोर्विवाद एव न मे रोचते ।

गणदासः—न मां देवी समानविद्यन परिभवनीयमनुमन्तुमर्हति ।

विदूषकः—भवतु द्रक्ष्याम उरभ्रसम्पातम् । किं मुधा वेतनदानेन ।

देवी—ननु कलहप्रियोऽसि

विदूषकः-मा तावत् । अन्योन्यकलहितयोर्मत्तहस्तिनोरेकतरस्मिन्ननिर्जिते कुत उपशमः ।

राजा—ननु स्वांगसौष्ठवाभिनयमुभयोर्दृष्टवती भगवती ।

परिव्राजिका—अथ किम् ।

राजा—तदिदानीमतः परं किमाभ्यां प्रत्याययितव्यम् ।

परिव्राजिका—तदेव वक्तुकामास्मि ।

शिष्टा क्रिया कस्यचिदात्मसंस्था
संक्रान्तिरन्यस्य विशेषयुक्ता ।
यस्योभयं साधु स शिक्षकाणां
धुरि प्रतिष्ठापयितव्य एव ॥२॥

विदूषकः—श्रुतं भगवत्या वचनमार्याभ्याम् । एष पिण्डितार्थः ।
उपदेशदर्शनेन निर्णय इति ।

हरदत्त.—परमुचितं नः । गणदासः—देवि, एवं स्थितम् ।
देवी—यदा पुनर्मन्दमेधा शिष्योपदेशं मलिनयति तदा आचार्यस्य दोषो नु । राजा—देवि, एवमुपपद्यते ।

गणदासः—विनेतुरद्रव्यपरिग्रहोऽपि बुद्धिलाघवं प्रकाशयति ।
देवी—(स्वगतम् ।) कथमिदानीम् । (गणदासं विलोक्य जनान्तिकम् ।)
अलमार्यपुत्रस्योत्साहकारणं मनोरथं पूरयित्वा । (प्रकाशम् ।) विरम निरर्थकादारम्भात् ।

विदूषकः—सुष्ठु भवती भणति । भो गणदास, संगीतापदेशेन सरस्वत्युपायनमोदकानि खादतः किं ते सुलभनिग्रहेण विवादेन ।
गणदासः—सत्यमयमेवार्थो देवीवचनस्य । श्रूयतामवसरप्राप्तमिदम्

लब्धास्पदोऽस्मीति विवादभीरो-
स्तितिक्षमाणस्य परेण निन्दाम्
यस्यागमः केवलजीविकायै
तं ज्ञानपण्यं वणिजं वदन्ति ॥३॥

देवी—अचिरोपनीता ते शिष्या । तदपरिनिष्ठितस्योपदेशस्यान्याय्यं प्रदर्शनम् ।

गणदासः—अत एव मे निर्बन्धः।

देवी—तेन हि द्वावपि भगवत्या उपदेशं दर्शयतम्।

परिव्राजिका—देवि, नैतन्न्याय्यम्। सर्वज्ञस्याप्येकाकिनो निर्णया भ्युपगमो दोषाय।

देवी—(आत्मगतम्।) मुग्धे, किं मां जागृतीमपि सुप्तामिव करोषि। (इति सासूयं परावर्तते।)

विदूषक—(गणदासं विलोक्य।) दिष्ट्या कोपव्याजेन देव्या परित्रातो भवान्। सुशिक्षितोऽपि सर्वं उपदेशदर्शने न निपुणो भवति।

गणदासः—देवि, श्रूयताम्। एवं जनो गृह्णाति। तदिदानीं
विवादे दर्शयिष्यन्तं क्रियासंक्रान्तिमात्मनः।
यदि मां नानुजानासि परित्यक्तोऽस्म्यहं त्वया ॥४॥
(आसनादुत्तिष्ठति।)

देवी—(स्वगतम्।) का गतिः। (प्रकाशम्।) प्रभवत्याचार्यः शिष्यजनस्य।

ततो नाट्यप्रयोगदर्शनव्याजेन नृपो गणदासशिष्यां मालविकां दृष्टवान्। ततः प्रभृति कलवत्खलु तस्यां साभिलाषो बभूव। केवलं देव्या धारिण्याश्रितः रसस्यात्मनः प्रभुत्वं न दर्शितवान्। एकदा देवी धारिण्यशोकदोहदाधिकारे मालविकां नियुक्तवती। अशोककुसुमवृत्तान्तेन च तस्यां प्रसादसुमुखी बभूव। यदा च सा मालविका राजदारिकेति देवी धारिणी ज्ञातवती तदा कृतदेवीशब्दां तां मालविकां देव्या धारिण्या अनुमन्या नृपः परिणीतवान्।



Notes—अन्तपालेन-सीमारक्षकेण । अवस्कद्य-अभिपत्य having assailed. वर्णावरः-वर्णेन अवरः of inferior caste; born of a वैश्य or शूद्र woman. क्षत्रियाः पुत्रः । दायाद m—an heir, one entitled to a share of partimony. परीप्सुः-परित्रातुमिच्छुः । उपेयोपायदर्शने-उपेयस्य साध्यस्य उपायाः साधनानि तेषां दर्शने ज्ञाने । उपक्रान्तम्-आरब्धम् । दुरधिगमः-दुःखेन प्राप्तिः । अधरोत्तरव्यक्तिः-अवरः अनुत्तमः उत्तरः उत्तमः तयोर्व्यक्तिः निर्णयः-न्यूनाधिकस्पष्टता । उपस्थानम्-आगमनम् । तीर्थात्-उपाध्यायात्, गुरोः । The teacher from whom something is learnt is put in the ablative case. अभिनयविद्या-नाट्यविद्या । परिगृहीतः-अनुग्रहेण स्वीकृतः । अधिक्षिप्तः-अवमानितः । परिवादकरः-निन्दाकरः। प्राश्निकः-परीक्षकः । समर्थं प्रतिज्ञातम्-A fair proposal. प्रथमः कल्पः-the best course to follow. व्यवहारः-विवादविषयपरीक्षा । प्रस्तावम्-प्रसंगम् । संरम्भे-विवादावेशे । कथं पश्यसि-अनयोः कतरस्य पराभवं कल्पयसीत्यर्थः । अवसादः पराजय । परिहीयते-न्यूनो वर्तते । अविहा It is an interjection showing 'surprise'; the repetition shows 'respect'. (१) सदृशक्षमयोः-सदृशा क्षमा ययोः । भूतधारिणी-पृथ्वी । पत्तन n. A town, a city. मध्यस्थ-impartial. परिच्छेत्तुम्-to pass judgment. प्रस्तूयताम्-आरभ्यताम् प्रयोगप्रधानम्-अभिनयप्रधानम् । उरभ्रसम्पातम्-मेषयुद्धम् । a fight of two rams. रागः &c the excellent acting exhibited by them in person. पिण्डितार्थः-gist-संक्षेपार्थः । सुलभनिग्रहः-सुलभपराजयः । (२) आगमः-शास्त्राध्ययनम् । अपरिनिष्ठितस्य-स्थैर्यमप्राप्तस्य । उपदेशदर्शने-विद्यासंक्रमणकर्मणि ।

---

महाकविश्रीकालिदासविरचितं विक्रमोर्वशीयम् ।

पुरा किल सोमवंश्य पुरूरवा नाम राजा सूर्योपस्थानात्प्रतिनिवर्तमानः परित्रायतां परित्रायतां य सुरपक्षपाती यस्य वाम्बरतले गतिरस्तीत्यार्तरवं कुर्वन्नप्सरसां गण दृष्टवान् । केशिना दानवेन च चित्रलेखाद्वितीयोर्वशी हृतेति ज्ञात्वा, प्रतिपालनाय हेमकूटशिखरं सङ्केतस्थानं विधाय, दैत्यहस्तादुर्वशीं चित्रलेखां च मोचयित्वा, कृतार्थो निवर्तमान पुरूरवा रथस्थामुर्वशीमप्रतिबोध्यमानां विलोक्यावदत् ।

राजा—सुन्दरि, समाश्वसिहि समाश्वसिहि ।

> गतं भयं भीरु सुरारिसंभवं
> त्रिलोकरक्षी महिमा हि वज्रिण ।
> तदेतदुन्मीलय चक्षुरायतं
> महोत्पलं प्रत्युषसीव पद्मिनी ॥१॥

चित्रलेखा—अहो कथमुच्छ्वसितमात्रसमावितजीविता अद्यापि संज्ञां न प्रतिपद्यते ।

राजा—बलवदत्रभवती परित्रस्ता ।

चित्रलेखा—सखि उर्वशि, पर्यवस्थापयात्मानम् । अनप्सरेव प्रतिभासि मे ।

( उर्वशी प्रत्यागच्छति । )

राजा—(सहर्षम् ।) अयि ! प्रकृतिमापद्यते ते प्रियसखी । पश्य

> आविर्भूते शशिनि तमसा मुच्यमानेव रात्रि-
> र्नैशस्यार्चिर्हुतभुज इव छिन्नभूयिष्ठधूमा ।

मोहेनान्तर्वेरतनुरियं लक्ष्यते मुक्तकल्पा
गंगा रोधःपतनकलुषा गृह्णतीव प्रसादम् ॥२॥

चित्रलेखा—सखि, विश्रब्धा भव। पराभूताः खलु त्रिदशपरिपन्थिनो हताशाः।

उर्वशी—(चक्षुषी उन्मील्य।) किं प्रभावदर्शिना महेन्द्रेण।

चित्रलेखा—न महेन्द्रेण। महेन्द्रसदृशानुभावेन अनेन राजर्षिणा पुरूरवसा।

उर्वशी—(राजानमवलोक्य। आत्मगतम्।) उपकृतं खलु दानवैः।

राजा—(प्रकृतिस्थामुर्वशीं निर्वर्ण्य। आत्मगतम्।) स्थाने खलु नारायणमपि विलोभयन्त्यस्तदूरुसंभवामिमां दृष्ट्वा व्रीडिताः सर्वा अप्सरस इति। अथवा नेयं तपस्विनः सृष्टिर्भवितुमर्हति।

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृंगारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥३॥

एवमुभयोः कामो लब्धावकाशो बभूव। अनन्तरं ते सर्वे यस्मिन्हेमकूटशिखरेऽप्सरसां गणः स्थितस्तत्र गताः। अत्रान्तरे केशिना हृतामुर्वशीं नारदादुपश्रुत्य, प्रत्याहरणार्थमस्याः शतक्रतुनादिष्टो गन्धर्वराजश्चित्ररथः पुरूरवसमेत्योवाच।

चित्ररथः—सखे। पुरा नारायणेनेयमतिसृष्टा मरुत्वते।
दैत्यहस्तादपाच्छिद्य सुहृदा संप्रति त्वया ॥४॥

राजा—मा मैवम्।

ननु वज्रिण एव वीर्यमेतद्
विजयन्ते द्विषदो यदस्य पक्ष्याः।

वसुधाधरकन्दराभिसर्पी
प्रतिशब्दोऽपि हरेर्भिनत्ति नागान् ॥५॥

चित्ररथः—युक्तमेतत्। अनुत्सेकः खलु विक्रमालंकारः।

राजा—सखे, नायमवसरो मम शतक्रतुं द्रष्टुम्। अतस्त्वमेवात्र-भवतीं प्रभोरन्तिकं प्रापय।

चित्ररथः—यथा भवान्मन्यते। इत इतो भवत्यः। (निष्क्रान्ताः सर्वे।)

अथैकदा महेन्द्रसदने सरस्वतीकृतकाव्यबन्धे लक्ष्मीस्वयंवरे तेषु तेषु रसान्तरेषु दिव्या सभा तन्मय्यासीत्। तस्मिन्काले लक्ष्मीभूमिकायां वर्तमानोर्वशी वारुणीभूमिकायां वर्तमानया मेनकया पृष्टा। सखि, समागता एते त्रैलोक्यसुपुरुषाः सकेशवाश्च लोकपालाः। कतमस्मिंस्ते भावाभिनिवेश इति। ततस्तया पुरुषोत्तम इति भणितव्ये पुरूरवसीति निर्गता वाणी। तेन सा महर्षिणा भरतेन शप्ता। किन्तु प्रेक्षणावसाने लज्जावनतमुखी महेन्द्रेण भणिता। हे उर्वशि, यस्मिंस्त्वं बद्धभावासि तस्य मे रणसहायस्य राजर्षेः प्रियमत्र करणीयम्। सा त्वं यथाकामं पुरूरवसमुपतिष्ठस्व यावत्स त्वयि दृष्टसंतानो भवेदिति।

अथ स्वनगरं निवृत्तो राजाप्यनंगपरवश उर्वशीमेवानुदिनं ध्यायन्न कुत्रापि निर्वृतिं लेभे। किन्त्वन्ते स उर्वशीं प्राप। सापि तं रतिसहायममात्येषु निवेशितराज्यधुरं राजर्षिं गृहीत्वा, गन्धमादनवनं विहर्तुं गता। तत्र खलु मन्दाकिन्याः पुलिनेषु सिकतापर्वतकेलिभिः क्रीडन्ती विद्याधरदारिकोदयवती नाम तेन राजर्षिणा

चिर निध्यातेति कुपितोर्वशी। ततो भर्तुरनुनयमप्रतिपद्यमाना गुरुशापसंमूढहृदया विस्मृतदेवतानियमा स्त्रीजनपरिहरणीयं कुमारवनं प्रविष्टा। प्रवेशानन्तरं च काननोपान्तवर्तिलताभावेन परिणतमस्या रूपम्। पुरूरवा अपि तस्मिन्नेव कानने प्रियतमां विचिन्वन्नस्य गिरिमुने प्रसादात् संगमनीयमणिं प्रियानुसारिणीं कांचिल्लतामालिंगतवान्। तत्स्थान एवोर्वशी प्रादुर्बभूव। अनन्तरं तया सह स्वनगरं प्रति निवृत्ते।

अथैकलोर्वशीलाभाद्राज्ञो बहुसंमतो दुकूलोत्तरच्छदे ताम्रवृन्ताधारे निक्षिप्य केनापि परिजनेन नीयमानः स संगमनीयमणिरामिषशंकिना गृध्रेणाक्षिप्तः। यावद्राजा हस्तावापसहितं शरासनमन्वैषत, तावद्बाणपथमतीतः स क्रव्यभोजनः। पश्चाद्राज्ञः कञ्चुकी सविदूषकं राजानमागत्य, कस्यापि नामाङ्कितेनानेन बाणेन विद्धः स विहगतस्करः समौलिरत्नः पतित इत्यावेदितवान्। नृपोऽपि नामाक्षराण्यनुवाच्यात्मन एवोर्वशीसंभवस्य पुत्रस्य स बाण इति ज्ञात्वा विस्मयं ययौ। अत्रान्तरे च्यवनाश्रमात्कुमारं गृहीत्वा, काचित्तापसी राजानमुपस्थिता। तां दृष्ट्वा राजावदत्।

**राजा**—अम्ब, अभिवादये।

**तापसी**—महाभाग, सोमवंशविस्तारयिता भव। (आत्मगतम्।) अहो अनाख्यातोऽपि विज्ञातोऽस्य राजर्षेरौरसः सम्बन्धः। (प्रकाशम्।) जात प्रणम ते गुरुम्।

**कुमारः**—(साचस्यमंजलिं करोति।) **राजा**—आयुष्मान्भव।

कुमार —(आत्मगतम् ।)

यदि हार्दमिदं श्रुत्वा पिता ममायं सुतोऽहमस्येति।
उत्सङ्गवर्धितानां गुरुषु भवेत्कीदृश स्नेह ॥६॥

राजा— भगवति, किमागमनप्रयोजनम् ।

तापसी—शृणोतु महाराज । एष दीर्घायुरायुर्जातमात्र एव उर्वश्या किमपि निमित्तमवेक्ष्य मम हस्ते न्यासीकृत । यत्क्षत्रिय कुमारस्य जातकर्मादि विधानं तदस्य भगवता च्यवनेनाशेषमनुष्ठितम् । गृहीतविद्यो धनुर्वेदेऽभिविनीत ।

राजा—सनाथ खलु संवृत्त ।

तापसी—अद्य पुष्पसमिदर्थमृषिकुमारकै सह गतेनानेनाश्रमविरुद्धमाचरितम् ।

विदूषक:—(सावेगम् ।) किमिव ।

तापसी—गृहीतामिष किल गृध्र पादपशिखरे निलीयमानोऽनेन लक्ष्यीकृतो बाणस्य ।

विदूषक:—( राजानमवलोकयति । ) राजा—ततस्तत ।

तापसी—तत उपलब्धवृत्तान्तेन भगवता च्यवनेनाहं समादिष्टा । निर्यातय हस्तन्यासमिति । तदिच्छामि देवीमुर्वशीं प्रेक्षितुम् ।

राजा—तेन हि आसनमनुगृह्णातु भगवती ।

तापसी—(उपनीत आसनं उपविशति ।)

राजा—लतव्य, आहूयतामुर्वशी ।

कञ्चुकी—यदाज्ञापयति । (इति निष्क्रान्त ।)

राजा—(कुमारमुद्दिश्य ।) एह्येहि वत्स ।

सर्वांगीणः स्पर्शः सुतस्य किल तेन मामुपगतेन।
आह्लादयस्व तावच्चन्द्रकरश्चन्द्रकान्तमिव ॥७॥

तापसी—जात, आनन्दय पितरम्।

कुमारः—(राजानमुपगम्य पादग्रहणं करोति।)

राजा—(कुमारं परिष्वज्य पादपीठे चोपवेश्य।) वत्स, इतस्तव पितुः प्रियसखं ब्राह्मणमशंकितो वन्दस्व।

विदूषकः—किमिति शंकिष्यते। ननु आश्रमवासपरिचित एव शाखामृगः।

कुमारः—(सस्मितम्।) तात, वन्दे।

विदूषकः—स्वस्ति भवते। (ततः प्रविशत्युर्वशी कञ्चुकी च।)

कञ्चुकी—इत इतो देवी।

उर्वशी—(कुमारमवलोक्य।) को नु खल्वेष सबाणासनः पादपीठे स्वयं महाराजेन संयम्यमानशिखण्डकस्तिष्ठति। (तापसीं दृष्ट्वा।) अहो सत्यवतीसूचितो मम पुत्रक आयुः। महान्खलु संवृत्तः।

तापसी—(उर्वशीं दृष्ट्वा।) जात, एहि प्रत्युद्गच्छ मातरम्।

कुमारः—(उर्वशीं प्रत्युद्गच्छति।)

उर्वशी—अम्ब, पादप्रणामं करोमि।

तापसी—वत्से, भर्तुर्बहुमता भव।

कुमारः—अम्ब, अभिवादये।

उर्वशी—(कुमारमुन्नमितमुखं परिष्वज्य।) वत्स, पितुराराधयिता भव। (राजानमुपेत्य।) जयतु जयतु महाराजः।

राजा—स्वागतं पुत्रवत्यै। इत आस्यताम्। (इत्यर्धासनं

उर्वशी—( उपविशति । ) ( सर्वे यथोचितमुपविशन्ति । )

तापसी—एष गृहीतविद्य आयु सांप्रतं कवचहरः संवृत्त । तदेतस्य ते भर्तु समक्षं निर्यातितो हस्तनिक्षेप । तद्विसर्जयितुमिच्छामि । उपरुध्यते ममाश्रमधर्म ।

उर्वशी—चिरस्यार्यां दृष्ट्वाधिकतरमवितृष्णास्मि । न शक्नोमि विसृष्टुम् । अन्याय्य पुनरपरोद्धुम् । तद्गच्छत्वार्या पुनर्दर्शनाय ।

राजा—अम्ब, भगवते च्यवनाय मां प्रणिपातय ।

तापसी—एव भवतु ।

कुमार —आर्ये, यदि सत्यमेव निवर्तसे, तदा मामप्याश्रम नेतुमर्हसि ।

राजा—अयि वत्स, उषित त्वया पूर्वस्मिन्नाश्रमे । द्वितीयमध्यासितु तव समय ।

तापसी—जात, गुरोर्वचनमनुतिष्ठ ।

कुमार—तेन हि,

य सुप्तवान्मदङ्के शिखण्डकण्डूयनोपलब्धसुख ।
तं मे जातकलापं प्रेषय मणिकण्ठकं शिखिनम् ॥८॥

तापसी—(विहस्य ।) एवं करोमि। स्वस्ति भवतु युष्मभ्यम् । ( इति निष्क्रान्ता ।)

तत उर्वश्येकपदेऽश्रुमुखी सवृत्ता । नृपेण च पृष्टा सावदत् । महाराज, अह पुरा महाराजगृहीतहृदया महेन्द्रेणाज्ञापिता । यदा स मम प्रियसखो राजर्षिस्त्वयि समुत्पन्नस्य वंशकरस्य मुख प्रेक्षिष्यते तदा त्वया भूयोऽपि मम समीपमागन्तव्यमिति । ततो मया

महाराजवियोगभीरुतया जातमात्र एव विद्यागमनिमित्तं भगवतश्च्यवनस्याश्रमपदे एष पुत्र आर्यायाः सत्यवत्या हस्तेऽप्रकाशं निक्षिप्तः। अद्य पितुराराधनसमर्थः संवृत्त इति कल्पयन्त्या निर्यातितो मे दीर्घायुः। तदेतावान्मे महाराजेन संवास इति। तच्छ्रुत्वा राजा वनगमनाय कृतबुद्धिर्बभूव। किन्तु तस्मिन्नेव काले भगवान्नारद आगतः। नृपेण च पूजितः सोऽवदत्।

नारदः—प्रभावदर्शी मघवा वनगमनाय कृतबुद्धिं भवन्तमनुशास्ति।

राजा—किमाज्ञापयति।

नारदः—त्रिकालदर्शिभिर्मुनिभिरादिष्टः सुरासुरसंगरो भावी। भवांश्च सांयुगीनः सहायो नः। तेन त्वया न शस्त्रं संन्यस्तव्यम्। इयं चोर्वशी यावदायुस्तव सहधर्मचारिणी भवत्विति।

उर्वशी—(अपवार्य।) अहो शल्यं मे हृदयादपनीतमिव।

राजा—परवानस्मि देवेश्वरेण।

नारदः—युक्तम्। किं ते भूयः पाकशासनः प्रियं करोतु।

राजा—यदि मे मघवा प्रसन्नः किमतः परमिच्छामि। तथापीदमस्तु

(भरतवाक्यम्।)

परस्परविरोधिन्योरेकसंश्रयदुर्लभम्।
संगतं श्रीसरस्वत्योर्भूतयेऽस्तु सदा सताम्॥१॥

Notes:—प्रतिपालनाय-प्रतीक्षायै। (१) आयतम्-दीर्घम्। प्रत्युषसि-प्रभाते। (२) नैशस्य-निशासम्बन्धिन। अर्चिः-ज्वाला। रोधस्तटस्य पतनेन कलुषा आविला। निद्रापरिपन्थिन-तिरस्कर्त्रा' ...येषां रे-

त्रिदशा देवा तेषां परिपन्थिन शत्रव -दानवा । प्रभावदर्शिना-प्रभावेन दैव्या शक्त्या द्रष्टुं पर्यालोचयितु शीलमस्य तेन। स्थाने is an adverb It means 'it is but proper that' अथवा 'or rather.' वा means 'or', but अथवा is used to correct or modify a previous statement (३) सर्गविधौ निर्माणकर्मणि । (४) अतिसृष्टा-दत्ता। महत्वत्-इन्द्र । (५) प्रतिशब्द -प्रतिध्वनि: । दरे -सिंहस्य । वसुधाधर -पर्वत । कन्दर -दरी। अनुत्सेक -निरभिमान , अनवलेप । भूमिका-वेषपरिग्रह । भावाभिनिवेश -दृढप्रेम बन्ध । आमिष-मांसखण्ड । हस्तावाप -हस्तत्राणम् । कव्यभोजन -मांसाशी (६) हार्दम्-प्रेम, स्नेह । विधानम्-विधि । अभिविनीत -शिक्षित । (७) सर्वांगीण -सर्वाङ्गव्यापी । शिखण्डक -शिखा। कवचहर -कवचधारणक्षम । अवितृष्णा-साभिलाषा । (८) जातकलापम्-जातबर्हम् । शिखिनम् मयूरम् । अप्रकाशम्-निभृतम् । सांयुगीन -सयुगे रणे साधु -युद्धकुशल । पाकशासन -पाकनामकदैत्यस्य शासन हन्ता इन्द्र ।

---

महाकविश्रीकालिदासविरचितम्।

## अभिज्ञानशाकुन्तलम् ।

एकदा पौरवो राजा दुष्यन्तो मृगया कर्तुं गत । कण्वस्या श्रमद च यात । तत्र देवमायामिव शकुन्तला दृष्ट्वा ता सोऽकामयत, ता चावदत्—

> व्यक्त राजन्यतनयां वेद्म्यह त्वां सुमध्यमे ।
> नहि चेत पौरवाणामधर्मे रमते कचित् ॥ इति ॥१॥

अपरं च । सतां हि संदेहपदेषु वस्तुष्वन्त करणस्य प्रवृत्तय प्रमाणम् । मेनकायां जाता सा शकुन्तला विश्वामित्रस्यात्मजेति

यदा स ज्ञातवांस्तदा स तां रहसि गान्धर्वविधिना पर्यणयत्। कतिपयान्दिवसांश्च तया सह नीत्वा स स्वनगरं न्यवर्तत।

एकदोटजे शकुन्तलैकाकिन्यासीत्। तस्मिन्काले सुलभकोपो महर्षिर्दुर्वासा आगतः। भर्तृगतया चिन्तया शून्यहृदया शकुन्तला तस्यागमनं न ज्ञातवती। अतः कुपितो दुर्वासा अवदत्। आः अतिथिपरिभाविनि—

विचिन्तयन्ती यमनन्यमानसा
तपोधनं वेत्सि न मामुपस्थितम्।
स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव ॥२॥

एवं शप्त्वा स महर्षिः प्रतिनिवृत्तः। किन्तु शकुन्तलायाः सख्या प्रियंवदया विज्ञापितो सोऽवदत्। मम वचनमन्यथा भवितुं नार्हति। किन्त्वभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यत इति मन्त्रयन्स्वयमन्तर्हितः।

अथ शकुन्तला दुष्यन्तेन परिणीता सा चापन्नसत्त्वेति ज्ञात्वा, महर्षिः कण्वः स्वशिष्यैः शार्ङ्गरवमिश्रैः परिवृतां तां गौतम्या सह भर्तुः सकाशं व्यसर्जयत्। किन्तु दुर्वाससः शापेन राजा दुष्यन्तः शकुन्तलायाः स्वीकरणं नास्मरत्। अतो नृपोऽवदत्। हे शकुन्तले,

व्यपदेशमाविलयितुं किमीहसे जनमिमं च पातयितुम्।
कूलंकषेव सिन्धुः प्रसन्नमम्भस्तटतरुं च ॥३॥

शकुन्तला—भवतु। यदि परमार्थतः परपरिग्रहशंकिना त्वयैवं

वक्तुं प्रवृत्ता, तदभिज्ञानेनानेन तवाशङ्कामपनेष्यामि ।

राजा—उदारः कल्पः ।

शकुन्तला—(मुद्रास्थानं परामृश्य) हा धिक् । अङ्गुलीयकशून्या मेऽङ्गुलिः ।

गौतमी—नूनं ते शक्रावताराभ्यन्तरे शचीतीर्थसलिलं वन्दमानायाः प्रभ्रष्टमङ्गुलीयकम् ।

राजा—(सस्मितम् ।) इदं तत्प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यते ।

गौतमी—महाभाग, नार्हस्येवं मन्त्रयितुम् । तपोवनसंवर्धितोऽनभिज्ञोऽयं जनः कैतवस्य ।

राजा—तापसवृद्धे ।

स्त्रीणामशिक्षितपटुत्वममानुषीषु
संदृश्यते किमुत याः प्रतिबोधवत्यः ।
प्रागन्तरिक्षगमनात्स्वमपत्यजात-
मन्यैर्द्विजैः परभृताः खलु पोषयन्ति ॥४॥

शकुन्तला—अनार्य, आत्मनो हृदयानुमानेन पश्यसि । क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते ।

राजा—(आत्मगतम् ।) संदिग्धबुद्धिं मां कुर्वन्नकैतव इवास्याः कोपो लक्ष्यते । (प्रकाशम्) भद्रे, प्रथितं दुष्यन्तस्य चरितम् । तथापीदं न लक्षये ।

शकुन्तला—सुष्ठु तावदत्र स्वच्छन्दचारिणी कृतास्मि याहमस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयस्थितविषस्य हस्ताभ्यासमुपगता । (इति पटान्तेन मुखमावृत्य रोदिति ।)

शार्ङ्गरवः—इत्थमात्मकृतं प्रतिहतं चापलं दहति।
अतः परीक्ष्य कर्तव्यं विशेषात्संगतं रहः।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥५॥

राजा—अयि भोः, किमत्रभवतीप्रत्ययादेवास्मान्संयुतदोषाक्षरैः क्षिणुथ।

शार्ङ्गरवः—(सासूयम्) श्रुतं भवद्भिरधरोत्तरम्।

आजन्मनः शाठ्यमशिक्षितो य-
स्तस्याप्रमाणं वचनं जनस्य।
परातिसन्धानमधीयते यै-
र्विद्येति ते सन्तु किलाप्तवाचः ॥६॥

राजा—भोः सत्यवादिन्, अभ्युपगतं तावदस्माभिरेवम्। किं पुनरिमामतिसंधाय लभ्यते।

शार्ङ्गरवः—विनिपातः।

राजा—विनिपातः पौरवैः प्रार्थ्यत इति न श्रद्धेयम्।

शारद्वतः—शार्ङ्गरव, किमुत्तरेण। अनुष्ठितो गुरोः सन्देशः। प्रतिनिवर्तामहे वयम्। (राजानं प्रति।)

तदेषा भवतः कान्ता त्यज वैनां गृहाण वा।
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी ॥७॥

गौतमि, गच्छाग्रतः। (इति प्रस्थिताः।)

शकुन्तला—कथमनेन कितवेन विप्रलब्धास्मि। यूयमपि मां परित्यजथ। (इत्यनुगच्छति।)

गौतमी—(स्थित्वा।) वत्स शार्ङ्गरव, अनुगच्छति खलु न

करुणपरिदेविनी शकुन्तला। प्रत्यादेशपरपे भर्तरि कि वा मे पुत्रिका करोतु।

शार्ङ्गरव —(सरोष निर्वृत्य।) कि पुरोभागे स्वातन्त्र्यमवलम्बसे।

(शकुन्तला भीता वेपते।)

शार्ङ्गरव —शकुन्तले। यदि यथा वदति क्षितिपस्तथा
त्वमसि किं पितुरुत्कलया त्वया।
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिकुले तव दास्यमपि क्षमम् ॥८॥

तिष्ठ। साधयामो वयम्।

अथ परावृत्तेषु कण्वशिष्येषु यदा सा शकुन्तला नृपस्य पुरोहितेन सह गमनपरासीत्तदा स्त्रीसंस्थानमेकं ज्योतिस्तामुत्क्षिप्यागच्छत्।

अथैकस्मिन्दिने राजा दुष्यन्तः शकुन्तलया प्रभ्रष्टमङ्गुलीयकं लब्धवान्। तस्य दर्शनेन स शकुन्तलाया प्रथमवृत्तान्तं स्मृतवान्। प्रकृतिगम्भीरोऽपि स पर्यश्रुनयनश्चासीत्। पश्चादिन्द्रेणाहूतो दुष्यन्तः स्वर्गं गतः। स्वर्गाच्च प्रतिनिवर्तमानो मार्गे मारीचाश्रमं द्रष्टुकामः स इन्द्रस्य सारथिं मातलिं पृष्टवान्। मातले, कतमस्मिन्प्रदेशे मारीचाश्रमः।

मातलिः—(हस्तेन दर्शयन्।)

वल्मीकाग्रनिमग्नमूर्तिरुरसा सन्दष्टसर्पत्वचा
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसंपीडितः।
अंसव्यापि शकुन्तनीडनिचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥८॥

राजा—( निमित्त सूचयित्वा ।)

मनोरथाय नाशंसे किं बाहो स्पन्दसे वृथा ।
पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते ॥११॥

निर्वर्णितवान् ततस्तत्रात्मनः पत्नीं शकुन्तलां पुत्रं च दृष्टवान् । ततो भगवतो मारीचस्य दर्शनं कृत्वा, दुर्वाससः शापादियं तपस्विनी तव सहधर्मचारिणी त्वया प्रत्यादिष्टा नान्यथा । स शापश्चाङ्गुलीयकदर्शनावसान इति शापवार्तां श्रुत्वा, मारीचाल्लब्धप्रसादः सपुत्रः दारैः सहात्मनः पुरीमागतः । तत्र स आनन्दस्य परां कोटिं प्राप्य, सदैव प्रकृतिहिताय प्रावर्तत ।

---

Notes —(१) राजन्यतनया-क्षत्रियपुत्रा । 'श्रीमद्भाग०' (२) प्रथमम्-It is used as an indeclinable. It means 'before', 'previously', 'already.' (३) व्यपदेशः कुलमादिशति मलिनयितुं किमीहसे पातयसे । कूलंकषा-तटसंघर्षिणी । उदारकल्प -An excellent proposal शचीतीर्थाभ्यन्तरे &c. A holy place near शक्रावतार consecrated to शची, wife of इन्द्र । कैतवस्य-शाठ्यस्य । (४) प्रतिबोधवत्य -शावादिव्यवहारकुशलाः । द्विजैः-पक्षिभिः । परभृता-कोकिलाः । धर्मकञ्चुकप्रवेशिन्-one putting on the garb of virtue. स्वच्छन्दचारिणी-a wanton woman. अधरोत्तरम् a base answer. (६) परातिसंधानम् परवञ्चनम् । रम्यवाचः-सत्यवचनाः । अतिसंधाय having deceived wilfully. विनिपात m. —अधःपात m. —नरक m. m. (७) सर्वतोमुखी— Complete in every way. पुरोभागे--दोषदर्शिनि–naughty, fault-finding. पुरोभागो यस्याः सा-पुरोभागा । (८) उत्कुला उत्कांता

कुलात् or उत्क्रान्त कुल (i e कुलमर्यादा) यया-a disgrace to the family. क्षमम् -योग्यम् । स्त्रीसंस्थानम्- स्त्रिया इव संस्थान (shape, form) यस्य तत् । (९) मूर्ति -शरीरम् । लताप्रतानम्- वल्लीसमूह । शकुन्त&c-शकुन्तानां पक्षिणां नीड स्थान तेन निचित व्याप्तम् । कर्णविवरमभि लक्ष्यीकृत्य । (१०) अभिषेकक्रिया -स्नानविधि । उत्सर्पिणी -उपरि धावन्ती । प्रस्तावः-the matter under discussion दु ख परिवर्तते-turns into misery.

---

## श्रीविशाखदत्तविरचितम् मुद्राराक्षसम् ।

नन्दकुलविनाशजनितरोषो राक्षस पितृवधामर्षितेन पर्वतक पुत्रेण मलयकेतुना सह सभाय चन्द्रगुप्तमभियोक्तुमुद्यत इति प्रकाशता गतोऽर्थं पौरेष्विति ज्ञात्वा चाणक्य आत्मनश्चर पृष्टवान् । भद्र, अपि वृषलमनुरक्ता प्रकृतय इति ।

चरः—अथ किम् । किन्त्वमात्यराक्षसेन सह प्रथम समुत्पन्नस्नेह बहुमानास्तय पुरुषा देवस्य चन्द्रश्रिय श्रिय न सहन्ते । प्रथम तावदार्यस्य रिपुपक्षे बद्धपक्षपात क्षपणको जीवसिद्धिर्नाम ।

चाणक्यः—(स्वगतम् ।) जीवसिद्धि । एष तावन्मत्प्रणिधि । (प्रकाशम् । ) भद्र, अथापर क ।

चरः—आर्य, अपरोऽमात्यराक्षसस्य प्रियवयस्य शकटदासो नाम । तृतीयश्चामात्यराक्षसस्य द्वितीयमिव हृदय पुष्पपुरनिवासी मणिकारश्रेष्ठी चन्दनदासो नाम यस्य गेहे कलत्र न्यासीकृत्या मात्यराक्षसो नगरादपक्रान्त । तत्र च मयेयमङ्गुलिमुद्रा दृष्टा ।

अमात्यराक्षसस्य च नामाङ्कितेत्यार्यस्य पादमूलं मया प्रापिता। (इति मुद्रामर्पयति।)

चाणक्य.—(मुद्रामवलोक्य गृहीत्वा।) भद्र, अपसर। न चिरादस्य परिश्रमस्यानुरूप फलमधिगमिष्यसि।

चर:—यदार्य आज्ञापयति। (इति निष्क्रान्त:।)

चाणक्य —शार्ङ्गरव शार्ङ्गरव। (प्रविश्य)

शिष्य:—उपाध्याय, आज्ञापय।

चाणक्य —वत्स, मसीभाजनं पत्रं चोपनय।

शिष्य —(तथा करोति।)

चाणक्य:—(पत्र गृहीत्वा स्वगतम्।) किमत्र लिखामि। अनेन खलु लेखेन राक्षसो जेतव्य।

(प्रविश्य।)

प्रतिहारी—जयत्वार्य। आर्य, देवश्चन्द्रश्रीरार्थं विज्ञापयति। इच्छाम्यार्येणाभ्यनुज्ञातो देवस्य पर्वतेश्वरस्य पारलौकिकं कर्तुम्। तेन च धारितपूर्वाण्याभरणानि ब्राह्मणेभ्य प्रतिपादयामीति।

चाणक्य.—शोणोत्तरे, उच्यतामस्मद्वचनाद्वृषल। पर्वतेश्वरधृतपूर्वाणि गुणवन्ति भूषणानि गुणवद्भ्य एव प्रतिपादनीयानि। तदहं स्वयमेव परीक्षितगुणान्ब्राह्मणान्प्रेषयामीति।

प्रतिहारी—यदार्य आज्ञापयति (इति निष्क्रान्ता।)

चाणक्य:—शार्ङ्गरव, उच्यन्तामस्मद्वचनाद्विश्वावसुप्रभृतयस्त्रयो भ्रातर। वृषलात्प्रतिगृह्याभरणानि भवद्भिरहं द्रष्टव्य इति।

शिष्य —यदाज्ञापयत्युपाध्याय । (इति निष्क्रान्त ।)

चाणक्य —उक्तोऽस्य लेखार्थ । पूर्व सर्वमनभिव्यक्तमेवास्ताम् । (नाट्येन लिखित्वा ।) शार्ङ्गरव ।

(प्रविश्य ।) शिष्य:—उपाध्याय, आज्ञापय ।

चाणक्य —वत्स श्रोत्रियाक्षराणि प्रयत्नलिखितान्यपि नियतमस्फुटानि भवन्ति । तदुच्यतामस्मद्वचनात्सिद्धार्थक । एभिरक्षरै केनापि कस्यापि स्वय वाच्यमिति अदत्तबाह्यनामान लेख शकटदासेन लेखयित्वा मामुपतिष्ठस्व । न चाख्येयमस्मै चाणक्यो लेखयतीति ।

शिष्य—तथा (इति निष्क्रान्त ।)

सिद्धार्थकेन तथानुष्ठिते चाणक्यस्तमब्रवीत् । वध्यस्थान गत्वा, शकटदासो वध्यस्थानादपनीय, राक्षस प्रापयितव्य । राक्षस एव कस्मिंश्चित्काले त्वया सेवितव्य इति । ततश्चाणक्येन जीवसिद्धिर्नगरान्निसारित । किन्तु तस्याज्ञया वध्यस्थान नीत शकटदास सिद्धार्थकेन रक्षित । एव च चाणक्येन रचित सर्व तेनानुष्ठितम् । ततश्चाणक्य शिष्यमवदत् । वत्स, मणिकारश्रेष्ठिन चन्दनदास द्रष्टुमिच्छामीति ।

शिष्य:—तथा । ( इति निष्क्रम्य चन्दनदासेन सह प्रविश्य । ) उपाध्याय, अय श्रेष्ठी चन्दनदास ।

चन्दनदास —जयत्वार्य ।

चाणक्य —श्रेष्ठिन्, स्वागतमिदमासनमास्यताम् ।

चन्दनदास —( प्रणम्य । ) किं न जानात्यार्यो यथानुचित उपचारो हृदयस्य परिभवादपि महद् दुःखमुत्पादयति । तस्मादि हैवोचितायां भूमावुपविशामि ।

चाणक्य —भो श्रेष्ठिन्, मा मैवम् । सभावितमेवेदमस्मद्विधैर्भवत । तदुपविश्यतामासन एव ।

चन्द०—(स्वगतम् ।) उपक्षिप्तमनेन दुष्टेन किमपि । (प्रकाशम् ।) यदार्य आज्ञापयति । (इत्युपविष्ट ।)

चाणक्यः—भो श्रेष्ठिन् चन्दनदास, अपि प्रचीयन्ते संव्यवहाराणां वृद्धिलाभा ।

चन्द०—(स्वगतम् ।) अत्यादर शङ्कनीय । (प्रकाशम् ।) अथ किम् । आर्यस्य प्रसादेन अखण्डिता मे वणिज्या ।

चाण०—न खलु चन्द्रगुप्तदोषा अतिक्रान्तपार्थिवगुणानधुना स्मरयन्ति प्रकृती ।

चन्द०—(कर्णौ पिधाय ।) शान्तं पापम् । शारदनिशासमुद्गतेनेव पूर्णिमाचन्द्रेण चन्द्रश्रियाधिक नन्दन्ति प्रकृतय ।

चाण०—भो श्रेष्ठिन्, यद्येव प्रीताभ्य प्रकृतिभ्य प्रतिप्रियमिच्छन्ति राजान ।

चन्द०—आज्ञापयत्वार्य । किं कियदस्माज्जनादिष्यत इति ।

चाण०—भो श्रेष्ठिन्, चन्द्रगुप्तराज्यमिद न नन्दराज्यम् । यतो नन्दस्यैवार्थरुचेरर्थसम्बन्ध प्रीतिमुत्पादयति, चन्द्रगुप्तस्य तु भवतामपरिक्लेश एव ।

चन्द०—(सहर्षम् ।) आर्य, अनुगृहीतोऽस्मि ।

चाण०—भोः श्रेष्ठिन्, स चापरिक्लेशः कथमाविर्भवतीति ननु भवता प्रष्टव्याः स्मः। चन्द०—आज्ञापयत्वार्यः।

चाण०—संक्षेपतो राजनि अविरुद्धाभिर्वृत्तिभिर्वर्तितव्यम्।

चन्द०—आर्य, कः पुनरधन्यो राज्ञो विरुद्ध इत्यार्येणावगम्यते।

चाण०—भवानेव तावत्प्रथमम्।

चन्द०—(कर्णौ पिधाय) शान्तं पापं शान्तं पापम्। कीदृशस्तृणानामग्निना सह विरोधः।

चाण०—अयमीदृशो विरोधो, यत्त्वमद्यापि राजापथ्यकारिणोऽमात्यराक्षसस्य गृहजनं स्वगृहे रक्षसि।

चन्द०—आर्य, अलीकमेतत्केनाप्यनभिज्ञेन आर्यस्य निवेदितम्।

चाण०—भोः श्रेष्ठिन्, अलमाशङ्कया। भीताः पूर्वराजपुरुषाः पौराणामनिच्छतामपि गृहेषु गृहजनं निक्षिप्य देशान्तरं व्रजन्ति। ततस्तत्प्रच्छादनं दोषमुत्पादयति।

चन्द०—एवं नु इदम्। तस्मिन्समय आसीदस्मद्गृहेऽमात्यराक्षसस्य गृहजन इति।

चाण०—पूर्वमनृतमिदानीमासीदिति परस्परविरोधिनी वचने।

चन्द०—एतावदेवास्ति मे वाक्छलम्।

चाण०—भोः श्रेष्ठिन्, चन्द्रगुप्ते राजन्यपरिग्राह्यश्छलानाम्। तत्समर्पय राक्षसस्य गृहजनम्। अच्छलं भवतु भवतः।

चन्द०—आर्य, ननु विज्ञापयाम्यासीदस्मद्गृहेऽमात्यराक्षसस्य गृहजन इति।

चाण०—अथेदानीं क्व गतः। चन्द०—न जानामि।

चाण०—( स्मितं कृत्वा । ) कथं न ज्ञायते नाम। भोः श्रेष्ठिन्, शिरसि भयमतिदूरे तत्प्रतिकारः।

ततो गृहीतगृहसारः सपुत्रकलत्रश्चन्दनदासो निगृहीतः। नृपश्चन्द्रगुप्तश्च चाणक्येनादिष्टः कृतकालहं कृत्वा स्वतंत्रेण किंचित्कालान्तरं व्यवहर्तव्यमिति।

एकदा नृपवचनादाघोषितः कुसुमपुरे कौमुदीमहोत्सवः किन्तु चाणक्येन स प्रतिषिद्धः। अतो राजा चन्द्रगुप्तश्चाणक्यमाहूतवांस्त च पृष्टवान्।

राजा—आर्य, कौमुदीमहोत्सवप्रतिषेधस्य किं फलमार्यः पश्यति। न कदाचिदार्यस्य निष्प्रयोजना प्रवृत्तिः।

चाण०—वृषल, सम्यग्गृहीतवानसि न प्रयोजनमन्तरा चाणक्यः स्वप्नेऽपि चेष्टत इति।

राजा—आर्य, अत एव शुश्रूषा मां मुखरयति।

चाण०-वृषल, श्रूयताम्। इह खल्वर्थशास्त्रकारास्त्रिविधां सिद्धिमुपवर्णयन्ति राजायत्तां सचिवायत्तामुभयायत्तां चेति। ततः सचिवायत्तसिद्धेस्तव किं प्रयोजनान्वेषणेन। यतो वयमेवात्र नियुक्ता वत्स्यामः।

राजा—(सकोपं मुखं परावर्तयति।) (नेपथ्ये वैतालिकौ पठतः।)

> भूषणाद्युपभोगेन प्रभुर्भवति न प्रभुः।
> परैरपरिभूताज्ञस्त्वमिव प्रभुरुच्यते॥

राजा—आर्य वैहीनरे, आभ्यां वैतालिकाभ्यां सुवर्णशतसहस्रं दापय।

कञ्चुकी—यदाज्ञापयति देवः। (इति उत्थाय परिक्रामति।)

चाण०—( सक्रोधम् ।) वैहीनरे, तिष्ठ न गन्तव्यम् । वृषल, किमयमस्थाने महानर्थोत्सर्गः ।

राजा—(सकोपम् ।) आर्येणैवं सर्वत्र निरुद्धचेष्टाप्रसरस्य मे बन्धनमिव राज्यं न राज्यमिव ।

चाण०—वृषल, स्वयमनभियुक्तानां राज्ञामेते दोषाः संभवन्ति । तद्यदि न सहसे ततः स्वयमभियुज्यस्व ।

राजा—एते वयं स्वकर्मण्यभियुज्यामहे ।

चाण०—प्रियं नः । वयमपि स्वकर्मण्यभियुज्यामहे ।

राजा—यद्येवं तर्हि कौमुदीमहोत्सवप्रतिषेधस्य तावत्प्रयोजनं श्रोतुमिच्छामि ।

चाण०—वृषल, कौमुदीमहोत्सवानुष्ठानस्य किं प्रयोजनमित्यहमपि श्रोतुमिच्छामि ।

राजा—प्रथमं तावन्ममाज्ञाऽव्याघातः ।

चाण०—वृषल, ममापि तवाज्ञाव्याघात एव कौमुदीमहोत्सवप्रतिषेधस्य प्रथमं प्रयोजनम् । कुतः । या तवाज्ञा नृपतिशतैः शिरोभिरुह्यते सा मय्येव स्खलतीति तव विनयालंकृतं प्रभुत्वं कथयति । अपरं च । राक्षसोपदेशप्रवणो मलयकेतुरस्मानभियोक्तुमुद्यतः । सोऽयं व्यायामकालो नोत्सवकाल इति दुर्गसंस्कारे प्रारब्धव्ये किं कौमुदीमहोत्सवेनेति प्रतिषिद्धः ।

राजा—आर्य, सर्वस्यानर्थस्य हेतू राक्षस इहैव वर्तमान आर्येण कस्माद्विक्रम्य न गृहीतः ।

चाण०—राक्षस खल्वसौ। विगृह्य गृह्यमाणो युष्मद्बलानि बहूनि नाशयेत्स्वयं वा विनश्येत्। एवं सत्युभयथापि दोषः।

राजा—न शक्नुमो वयमार्यस्य वाचा वाचमतिशयितुम्। सर्वथामात्यराक्षस एव प्रशस्यतरः।

चाण०—(सक्रोधम्।) न भवानिति वाक्यशेषः। मा तावत्! भो वृषल, तेन किं कृतम्।

राजा—यदि न ज्ञायते तदा श्रूयताम्। तेन खलु महात्मना।

लब्धायां पुरि यावदिच्छमुषितं कृत्वा पदं नो गले
व्याघातो जयघोषणादिषु बलादस्मद्बलानां कृतः।
अत्यर्थं विपुलैः स्वनीतिविभवैः संमोहमापादिता
विश्वास्येष्वपि विश्वसन्ति मतयो न स्वेषु वर्गेषु नः॥

चाण०- (विहस्य।) एतत्कृतं राक्षसेन। वृषल, मया पुनर्ज्ञातं नन्दमिव भवन्तमुद्धृत्य भवानिव भूतले मलयकेतू राजाधिराजपदे नियोजित इति।

राजा—अन्येनैवेदमनुष्ठितं, किमत्रार्यस्य।

चाण०—आ वेन। राजा—नन्दकुलविद्वेषिणा दैवेन।

चाण० -दैवमविद्वांसः प्रमाणयन्ति।

राजा—विद्वांसोऽप्यविकत्थना भवन्ति।

चाण०—(सकोपम्।) वृषल, भृत्यमिव मामारोढुमिच्छसि।

राजा—(सावेगमात्मगतम्।) अये कथं सत्यमेवार्यः कुपितः।

चाण०—(कृतककोपं संहृत्य।) वृषल, वृषल, अलमुत्तरोत्तरेण। यद्यस्मत्तो गरीयान्राक्षसोऽवगम्यते तदिदं शस्त्रं तस्मै दीयताम्।

(इति कञ्चुकी निष्क्रान्तः ।)

राजा—आर्य वैहीनरे, अतःप्रभृत्यनादृत्य चाणक्यं चन्द्रगुप्तः स्वयमेव राज्यं करिष्यतीति गृहीतार्था क्रियन्तां प्रकृतयः ।

कञ्चु०—(आत्मगतम् ।) कथं निरुपपदमेव चाणक्यमिति नार्यचाणक्यमिति । हन्त संगृहीतोऽधिकारः अथवा न खल्वत्र वस्तुनि देवदोषः । कुतः ।

> स दोषः सचिवस्यैव यदसत्कुरुते नृपः ।
> याति यन्तुः प्रमादेन गजो व्यालत्ववाच्यताम् ॥

राजा—आर्य, किं विचारयसि ।

कञ्चु०—देव न किंचित् । दिष्ट्या देव इदानीं देवः संवृत्तः ।

(इति निष्क्रान्तः ।)

राजा—(आत्मगतम् ।) एवमस्मासु गृह्यमाणेषु स्वकार्यसिद्धिकामः सकामो भवत्वार्यः । (प्रकाशम् ।) शोणोत्तरे, अनेन शुष्ककलहेन शिरोवेदना मां बाधते । शयनगृहमादेशय ।

प्रतिहारी—एतु एतु देव ।

राजा—(स्वगतम् ।) आर्याज्ञयैव मम लङ्घितगौरवस्य
बुद्धिः प्रवेष्टुमिव भूविवरं प्रवृत्ता ।
ये सत्यमेव हि गुरूनतिपातयन्ति
तेषां कथं नु हृदयं न भिनत्ति लज्जा ॥

मलयकेतोर्बले सुश्लिष्टोऽभूच्चाणक्यप्रयोग । तद्यथा–सिद्धार्थकस्य प्रार्थनया राक्षसस्य मित्रेण शकटदासेन लिखितो लेखो यो चाणक्यस्याज्ञया चराहस्तेन्यथा राक्षसनामाङ्कितया मुद्रया मुद्रित आसीत् स लेख, पर्वतेश्वरेण धृतपूर्वाणि विभावसुप्रभृतिभ्यश्च दत्तानि भूषणानि यानि चाणक्यप्रयुक्तेन वणिग्जनेनामात्यराक्षसे विक्रीतानि तानि भूषणान्यन्यानि च वस्तूनि मलयकेतोर्दृष्टिगोचर गतानि। येन स शङ्कितहृदयो बभूव। अमात्यराक्षस च सहता धिकार कृतवान्। ततोऽमात्यराक्षस आत्मनो मित्र चन्दन दास मोचयितु गत। किन्तु नीतिनिपुणबुद्धेश्चाणक्यस्य वश यात। अत्रान्तरे मलयकेतुश्चाणक्यस्य भागुरायणादिभिर्बद्ध। अन्ते चाणक्यनीत्या राक्षसश्चन्द्रगुप्तस्य साचिव्यग्रहणेन सानुग्रह कृत। मलयकेतवे च पित्र्यमेव राज्य दत्तम्।

---

Notes —उपाध्याय -उपेत्याधीयतेऽस्मात्–आचार्य। पारलौकिकम् परलोकाय हितम्-That which secures a good position for the dead in the next world, the religious rites to be performed on one's death. बाह्यनाम-The name of the addressee स्मरयन्ति-Causal of स्मृ-Cause to remember with regret शान्त पापम्-God forbid. This expression indicates a wish that some evil should be averted. वाक्छलम्-Contradiction in words कौमुदीमहोत्सव –The festival on the full moon day of कार्तिक। वृषल –शूद्रः। कञ्चुकी He is described as-अन्त पुर-

चरो राज्ञां वृद्धो विप्रो गुणान्वितः। सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते॥ अर्थशास्त्रम्—अर्थते गम्यते इत्यर्थः, तस्य शास्त्रम्—The science of polity; politics. वैतालिकः—विविधेन तालेन चरति इति वैतालिकः—A bard. एवं गृह्यमाणेषु—Understood to be such.

---

## श्रीमद्भट्टनारायणप्रणीतं वेणीसंहारम्।

कौरवस्त्रीणामयुक्तेषु केशेषु नाहं मम केशान्संयंस्यामीति यद्यपि द्रौपद्या प्रतिज्ञातं तथापि प्रतिपन्नदौत्यो भगवान्वासुदेवो महाराजदुर्योधनशिविरं प्राप्तवान्। तत्र च पाण्डवपक्षपातामर्षितेन सुयोधनेन संयंतुमारब्धः। ततः स महात्मा दर्शितविश्वरूपतेजःसंपातमूर्छितमवधूय कुरुकुलं पाण्डवशिबिरसन्निवेशमनुप्राप्तः। ततः कुलाने यौधिष्ठिरे क्रोधज्योतिरजृम्भत। कौरवपाण्डवानां च तुमुलं युद्धं समापेदे। एकदा राजा दुर्योधनो राज्ञीं भानुमतीं गतः। तदानीं प्रतिहारी तं सोद्वेगमुपसृत्याब्रवीत्—

प्रतिहारी—जयतु जयतु महाराजः। महाराज, एषा खलु जामातुः सिन्धुराजस्य माता दुःशला च प्रतिहारभूमौ तिष्ठति।

राजा—(किंचिद्विचिन्त्यात्मगतम्।) किं जयद्रथमाता दुःशला चेति। कच्चिदभिमन्युवधामर्षितैः पाण्डुपुत्रैर्न किंचिदत्याहितमाचेष्टितं भवेत्। (प्रकाशम्।) गच्छ। प्रवेशय शीघ्रम्।

प्रतिहारी—यन्महाराज आज्ञापयति। (इति निष्क्रान्ता।) (ततः प्रविशति संभ्रान्ता जयद्रथमाता दुःशला च।) (उभे सास्रं दुर्योधनस्य पादयोः पततः।)

माता—परित्रायतां परित्रायतां कुरुनाथ ! (दुःखात् रोदिति ।)

राजा—(ससम्भ्रममुत्थाप्य ।) अम्ब, समाश्वसिहि समाश्वसिहि । किमत्याहितम् ? अपि कुशलं समराङ्गणेष्वप्रतिरथस्य जयद्रथस्य ?

माता—जात, कुतः कुशलम् । राजा—कथमिव ।

माता—(सशङ्कम् ।) अद्य खलु पुत्रवधामर्षोद्दीपितेन गाण्डीविनानस्तमिते दिवसनाथे तस्य वधः प्रतिज्ञातः ।

भानुमती—आर्यपुत्र, यद्यप्येवं तथापि गुरुकृतप्रतिज्ञाभरो धनञ्जयः स्थानं खलु शङ्कायाः।

माता—जाते, साधु काचोचितं त्वया मन्त्रितम्।

राजा—आः ममापि नाम दुर्योधनस्य शङ्कास्थानं पाण्डवाः। अपि च भानुमति, विज्ञातपाण्डवप्रभावे, किं त्वमप्येवमाशङ्कसे। पश्य।

दुःशासनस्य हृदयक्षतजाम्बुपाने
दुर्योधनस्य च यथा गदयोरुभङ्गे।
तेजस्विनां समरमूर्धनि पाण्डवानां
ज्ञेया जयद्रथवधेऽपि तथा प्रतिज्ञा ॥२॥

कः कोऽत्र भोः। जैत्रं मे रथमुपकल्पय तावत्। यावदह मपि तस्य प्रगल्भपाण्डवस्य जयद्रथपरिरक्षणेनैव मिथ्याप्रतिज्ञा वैलक्ष्यसंपादितमशस्त्रपूतं मरणमुपदिशामि। देवि, प्रविश त्वम भ्यन्तरमेव। (इति निष्क्रान्ताः सर्वे)

स्त्विवन्तेऽर्जुनेन किन्नुरानवधः कृतः। (ततः प्रविशत्यश्वत्थामा)

अश्वत्थामा—महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचण्डघनगर्जितप्रतिरवानुकारी मुहुः।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः ॥३॥

(विचिन्त्य।) ध्रुवं गाण्डीविना सात्यकिना वृकोदरेण वा यौवन दर्पादतिक्रान्तमर्यादेन परिकोपितस्तातः समुल्लंघ्य शिष्यप्रियतामा त्मप्रभावसदृशमाचेष्टते। (नेपथ्ये।) कुतोऽद्यापि ते तातः।

अश्वत्थामा— (श्रुत्वा) किं ब्रूथ—कुतोऽद्यापि ते तात इति।

माता—परित्रायतां परित्रायतां कुरुनाथः । (दुःशला रोदिति ।)

राजा—(ससम्भ्रममुत्थाप्य ।) अम्ब, समाश्वसिहि समाश्वसिहि । किमत्याहितम् । अपि कुशलं समराङ्गणेष्वप्रतिरथस्य जयद्रथस्य ।

माता—जात, कुतः कुशलम् । राजा—कथमिव ।।

माता—(साशङ्कम् ।) अद्य खलु पुत्रवधामर्षोद्दीपितेन गाण्डीविनानस्तमिते दिवसनाथे तस्य वधः प्रतिज्ञातः ।

राजा—( सस्मितम् । ) इदं तदश्रुकारणमम्बाया दुःशीलायाश्च । पुत्रशोकादुन्मत्तस्य किरीटिनः प्रलापैरेवमवस्था । अहो मुग्धत्वमबलानाम् । अम्ब कृतं विषादेन । वत्से दुःशीले, अलमश्रुपातेन । कुतश्चायं तस्य धनंजयस्य प्रभावो दुर्योधनबाहुपरिघरक्षितस्य महारथजयद्रथस्य विपत्तिमुत्पादयितुम् ।

माता—जात, यतश्च बन्धुवधामर्षोद्दीपितकोपानला अनपेक्षितशरीरा वीराः परिकामन्ति ।

राजा—(सोपहासम् ।) एवमेतत् । सर्वजनप्रसिद्धमेवामर्षित्वं पाण्डवानाम् । पश्य । हस्ताकृष्टविलोलकेशवसना दुःशासनेनाज्ञया
पाञ्चाली मम राजचक्रपुरतो गौर्गौरिति व्याहृता ।
तस्मिन्नेव स किंनु गाण्डिवधरो नासीत्पृथानन्दनो
यूनः क्षत्रियवंशजस्य कृतिनः क्रोधास्पदं किं न तत् ॥१॥

माता—असमाप्तप्रतिज्ञाभरस्यात्मवधोऽस्य प्रतिज्ञातः ।

राजा—यद्येवमलमानन्दस्थानेऽपि ते विषादेन । ननु वक्तव्यमुत्सन्नः सानुजो युधिष्ठिर इति । अन्यच्च मातः, का शक्तिरस्ति धनञ्जयस्यान्यस्य वा कुरुराजपरिवारवर्धितमहिम्नो नामापि ग्रहीतुं ते तनयस्य ।

भानुमती—आर्यपुत्र, यद्यप्येवं तथापि गुरुकृतप्रतिज्ञाभरो धनञ्जयः स्थानं खलु शङ्कायाः।

माता—जाते, साधु कालोचितं त्वया मन्त्रितम्।

राजा—आः ममापि नाम दुर्योधनस्य शङ्कास्थानं पाण्डवाः। अपि च भानुमति, विज्ञातपाण्डवप्रभावे, किं त्वमप्येवमाशङ्कसे। पश्य।

दुःशासनस्य हृदयक्षतजाम्बुपाने
दुर्योधनस्य च यथा गदयोरुभङ्गे।
तेजस्विनां समरमूर्धनि पाण्डवानां
ज्ञेया जयद्रथवधेऽपि तथा प्रतिज्ञा॥२॥

कः कोऽत्र भोः। जैत्रं मे रथमुपकल्पय तावत्। यावदहमपि तस्य प्रगल्भपाण्डवस्य जयद्रथपरिरक्षणेनैव मिथ्याप्रतिज्ञावैलक्ष्यसंपादितमशस्त्रपूतं मरणमुपदिशामि। देवि, प्रविश त्वमभ्यन्तरमेव। (इति निष्क्रान्ताः सर्वे)

किन्त्वन्तेऽर्जुनेन सिन्धुराजवधः कृतः। (ततः प्रविशत्यश्वत्थामा)

अश्वत्थामा—महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचण्डघनगर्जितप्रतिरवानुकारी मुहुः।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
श्रुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः॥३॥

(विचिन्त्य।) ध्रुवं गाण्डीविना सात्यकिना वृकोदरेण वा यौवनदर्पादतिक्रान्तमर्यादेन परिकोपितस्तातः समुल्लङ्घ्य शिष्यप्रियतामात्मप्रभावसदृशमाचेष्टते। (नेपथ्ये।) कुतोऽद्यापि ते तातः।

अश्वत्थामा— (श्रुत्वा) किं ब्रूथ—कुतोऽद्यापि ते तात इति।

(सरोषम्) आ क्षुद्रा समरभीरव, कथमेव प्रलपता न सहस्रधा न दीर्णमनया जिह्वया । (प्रविश्य सम्भ्रान्त सप्रहार )

सूत —परित्रायतां परित्रायतां कुमार । (इति पादयो पतति ।)

अश्वत्थामा—(विलोक्य ।) अये कथं तातस्य सारथिरश्वसेन । आर्य, ननु त्रैलोक्यत्राणक्षमस्य सारथिरसि । किं मत्त शिशुजना त्परित्राणमिच्छसि ।

सूत —(उत्थाय सकरुणम् ।) कुतोऽद्यापि ते तात ।

अश्वत्थामा—(सावेगम् ।) किं तातो नामास्तमुपगत ।

सूत —अथ किम् । अश्वत्थामा—हा तात । (इति मोहमुपगत ।)

सूत —कुमार, समाश्वसिहि समाश्वसिहि ।

अश्व०—(लब्धसंज्ञ सास्रम् ।) आर्य, कथय कथय । कथं तादृग्भुजवीर्यसागरस्तातोऽपि नामास्तमुपगत ।

सूत:—(अश्रूणि विसृज्य ।) श्रूयताम् ।

अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा
स्वैरं शेषे गज इति किल व्याहृतं सत्यवाचा ।
तच्छ्रुत्वासौ दयिततनय प्रत्ययात्तस्य राज्ञ:
शस्त्राण्याजौ नयनसलिलं चापि तुल्यं मुमोच ॥४॥

अश्व०—हा तात हा सुतवत्सल हा युधिष्ठिरपक्षपातिन् ।
(इति रोदिति ।) (तत प्रविशति कृप ।)

कृप:—(उपसृत्य ससम्भ्रमम् ।) वत्स, समाश्वसिहि समाश्वसिहि ।

अश्व०—(आकाशे ।) युधिष्ठिर युधिष्ठिर,

आजन्मनो न वितथं भवता किलोक्तं
न द्वेक्षि यज्जनमतस्त्वमजातशत्रु: ।

तातेः गुरौ द्विजवरे मम भाग्यदोषा—
त्सर्वं तदेकपद एव कथं निरस्तम् ॥५॥

सूतः—कुमार, एष ते मातुलः शारद्वतः पार्श्वे तिष्ठति ।

अश्व०—(पार्श्वे विलोक्य । सबाष्पम् ।) मातुल मातुल, येन सह त्वमद्य रणभुवं गतः स ते स्वसुः श्लाघ्यो भर्ता क्व नु खलु गतः ।

कृपः—परिगतपरिगन्तव्य एव भवान् । तदलमत्यन्तशोकावेगेन ।

(नेपथ्ये ।) आचार्यस्य त्रिभुवनगुरोर्न्यस्तशस्त्रस्य शोकाद्
द्रोणस्याजौ नयनसलिलक्षालितार्द्राननस्य ।
मौलौ पाणिं पलितधवले न्यस्य कृत्वा नृशंसं
धृष्टद्युम्नः स्वशिबिरमयं याति सर्वे सहध्वम् ॥६॥

अश्व०—(सक्रोधं सकम्पं च कृपसूतौ दृष्ट्वा ।) किं नामेदम् ।

कृपः—वत्स, एवं किल जनः कथयति ।

अश्व०—आः दुरात्मन्पाञ्चालापसद,

तातं शस्त्रग्रहणविमुखं निश्चयेनोपलभ्य
त्यक्त्वा शङ्कां खलु विदधतः पाणिमद्योत्तमाङ्गे ।
अश्वत्थामा करधृतधनुः पाण्डुपाञ्चालसेना-
तूलोत्क्षेपप्रलयपवनः किं न यातः स्मृतिं ते ॥७॥

कृप०—वत्स, अनतिक्रमणीयेऽस्मिन्दारुणे परिभवाग्नौ सर्वेषामस्माकं कोऽन्यस्त्वामन्तरेण शक्तः प्रतिकर्तुम् । किन्तु—

अश्व०—किमतः परम् ।

कृपः—सैनापत्येऽभिषिक्तमत्रभवन्तमिच्छामि समरभुवमवतारयितुम् ।

अश्व०—मातुल, परतन्त्रमिदमकिञ्चित्करं च ।

कृप—वत्स, न खलु परतन्त्र माकिञ्चित्कर च। पश्य।

भवेदभीष्ममद्रोण धृतराष्ट्रबल कथम्।
यदि तत्तुल्यकर्मात्र भवान्धुरि न युज्यते ॥८॥

कृतपरिकरस्य भवादृशस्य त्रैलोक्यमपि न क्षम परिपन्थीभवितु किं पुनर्युधिष्ठिरबलम्। तदेव मन्ये परिकल्पिताभिषेकोपकरण कौरवराजो न चिरात्त्वामेवाभ्यपेक्षमाणस्तिष्ठतीति।

अश्व०—यद्येव त्वरते मे परिभवानलदह्यमानमिदं चेतस्तत्प्रतिकार जलावगाहनाय। तदह गत्वा तातवधविषण्णमानस कुरुपति सैनापत्यस्वयग्रहणप्रणयसमाश्वासनया मन्दसन्ताप करोमि।

कृप —वत्स, एवमिदम्। अतस्तमेवोद्देश गच्छाव। (इति परिक्रमत।)

( तत प्रविशत कर्णदुर्योधनौ। )

तेजस्वी रिपुहतबन्धुदु खपार
बाहुभ्या व्रजति धृतायुधप्लवाभ्याम्।
आचार्य सुतनिधन निशम्य सख्ये
किं शस्त्रग्रहणसमये विशस्त्र आसीत् ॥९॥

अथवा सूक्तमिदमभियुक्तै प्रकृतिर्दुस्त्यजेति। यत शोकान्धमनसा तेन विमुच्य क्षात्रधर्मकार्कश्य द्विजातिधर्मसुलभो मार्दवपरिग्रह कृत।

कर्ण —राजन्कौरवेश्वर, न खल्विदमेवम्। दुर्यो०—कथं तर्हि।

कर्ण —एव किल द्रोणस्याभिप्राय आसीत्। यथाश्वत्थामा मया पृथिवीराज्येऽभिषेक्तव्य इति। तस्याभावाद्वृद्धस्य मे ब्राह्मणस्य वृथा शस्त्रग्रहणमिति तथा कृतवान्।

दुर्यो०—(सशिर कम्पम्।) एवमिदम्।

कर्ण०—एतदर्थं च कौरवपाण्डवपक्षपातप्रवृत्तमहासंग्रामस्य राज्ञ
स्य परस्परक्षयमपेक्षमाणेन तेन प्रधानपुरुषेण उपेक्षा कृता।
दुर्यो०—एवमेतत्। क सन्देह।

दत्त्वाभयं सोऽतिरथी वध्यमानं किरीटिना।
सिन्धुराजमुपेक्षेत नैव चेत्कथमन्यथा ॥१०॥

कृप०—(विलोक्य।) वत्स, एष दुर्योधनः सूतपुत्रेण सहास्या
न्यग्रोधच्छायायामुपविष्टस्तिष्ठति। तदुपसर्पावः।
(तथा कृत्वा।) उभौ—विजयतां कौरवेश्वरः।
दुर्यो०—(दृष्ट्वा) अये कथं कृपोऽश्वत्थामा च। (आसनादवतीर्य
कृपं प्रति।) गुरो, अभिवादये। (अश्वत्थामानमालिङ्ग्य पार्श्वे उपवेशयति
अश्वत्थामाप्यप्रमुपविशति।)
कर्ण—द्रौणायने, अलमत्यर्थमात्मानं शोकानले प्रक्षेप्तुम्।
दुर्यो०—आचार्यपुत्र, को विशेष आवयोरस्मिन्व्यसनमहार्णवे।
अश्व०—राजन्, एवं पक्षपातिनि त्वयि युक्तमेव शोकभारं लघू
कर्तुम्। किन्तु—

मयि जीवति यत्तातः केशग्रहमवाप्तवान्।
कथमन्ये करिष्यन्ति पुत्रेभ्यः पुत्रिणः स्पृहाम् ॥११॥

कर्ण—द्रौणायने, किमत्र क्रियते यदा तेनैव सर्वपरित्राणहेतुना
शस्त्रमुत्सृजता तादृशीमवस्थामात्मा नीतः।
अश्व०—अङ्गराज, किमाह भवान् किमत्र क्रियत इति। श्रूयतां
यत्क्रियते।

यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां

यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम्॥१२

दुर्यो०—आचार्यपुत्र, तस्य तथाविधस्यानन्यसाधारणस्य ते वीरभावस्य किमन्यत्सदृशम्।

कृप०—राजन्, सुमहान्खलु द्रोणपुत्रेण वोढुमध्यवसितः समरभारः तदहमेवं मन्ये भवता कृतपरिकरोऽयमुच्छेत्तुं लोकत्रयमपि समर्थः किं पुनर्युधिष्ठिरबलम्। अतोऽभिषिच्यतां सैनापत्ये।

दुर्यो०—सुष्ठु युज्यमानमभिहितं युष्माभिः। किन्तु प्राक्प्रतिपन्नोऽयमर्थोऽङ्गराजस्य।

कृप०—राजन्, असदृशपरिभवशोकसागरे निमज्जन्तमेनमङ्गराजस्यार्थे नैवोपेक्षितुं युक्तम्। अस्यापि तदेवारिकुलमनुशासनीयम्। अतः किमस्य पीडा न भविष्यति।

अश्व०—राजन् कौरवेश्वर, किमद्यापि युक्तायुक्तविचारणया।

> मयस्मपरिबोधितः स्तुतिभिरद्य शेषे निशा-
> मकेशवमपाण्डवं भुवनमद्य निःसोमकम्।
> इयं परिसमाप्यते रणकथाद्य दोःशालिना
> व्यपैतु नृपकाननातिगुरुरद्य भारो भुवः १३॥

कर्णः—(विहस्य) वक्तुं सुकरमिदं दुष्करमध्यवसितुम्। बहवः कौरवबलेऽस्य कर्मणः शक्ताः।

अश्व०—अङ्गराज, एवमिदम्। बहवः कौरवबलेऽत्र शक्ताः। किन्तु दुःखोपहतः शोकावेगवशाद् ब्रवीमि न पुनर्वीरजनाधिक्षेपेण।

यद्येन मौलिदलनेऽप्युदासितं
सुचिरं स्त्रियेव नृपचक्रसंनिधौ ॥१८॥

अश्व०—(सक्रोधं सकम्पं च।) दुरात्मन् राजवल्लभ, सूतापसद—

कथमपि न निषिद्धो दुःखिना भीरुणा वा
द्रुपदतनयपाणिस्तेन पित्रा ममाद्य।
तव भुजबलदर्पाध्मायमानस्य वामः
शिरसि चरण एष न्यस्यते वारयैनम् ॥१९॥

(इति तथाकर्तुमुत्तिष्ठति।)

कृपदुर्योधनौ—गुरुपुत्र, मर्षय मर्षय। (इति निवारयतः।)
(अश्वत्थामा चरणप्रहारं नाटयति।)

कर्णः—(सक्रोधमुत्थाय खड्गमाकृष्य।) अरे दुरात्मन् ब्रह्मबन्धो—

जात्या काममवध्योऽसि चरणं त्विदमुद्धृतम्।
अनेन लूनं खड्गेन पतितं द्रक्ष्यसि क्षितौ ॥२०॥

अश्व०—अरे मूढ किं नाम जात्याकाममवध्योऽहम्। इयं सा जातिस्त्यक्ता। (इति यज्ञोपवीतं छिनत्ति। पुनश्च सक्रोधम्।)

अद्य मिथ्याप्रतिज्ञोऽसौ किरीटी क्रियते मया।
शस्त्रं गृहाण वा त्यक्त्वा मौलौ वा रचयाञ्जलिम् ॥२१॥

(उभावपि खड्गनाकृष्यान्योन्यं प्रहर्तुमुद्यतौ। कृपदुर्योधनौ निवारयतः।)

दुर्योधनः—सखे आचार्यपुत्र, शस्त्रग्रहणेनालम्।

कृपः—वत्स सूतपुत्र, शस्त्रग्रहणेनालम्।

अश्व०—मातुल मातुल, किं निवारयसि। अयमपि तातनिन्दाप्रगल्भः सूतापसदो धृष्टद्युम्नपक्षपात्येव।

कर्णः—राजन् न खल्वयं निवारयितव्यः।

Notes—१ गौर्गौरिति व्याहृता was addressed as 'Oh the cow, the cow' Here 'गौ' is used in the sense of 'an object of pity'. तस्मिन् i e तस्मिन्काले or राजचक्रे। २ तपस्विनाम्–the word is used ironically समरमूर्धनि–in the thick of the battle प्रगल्भ boastful ३ पुष्करावर्तका–the largest and most formidable clouds They appear at the time of the destruction of the world पुष्करावर्तकास्तेन कारणेनेह शब्दिता। कल्पान्ते वृष्टिकर्तारः संवर्ताग्नेर्नियामकाः। ४ स्वैरम्–in a low voice indistinctly ५ अजातशत्रु न जातः शत्रुः। शारद्वतः–कृप। परिगत&c–you already know what is to be known ६ नृशंसम्–नृशंस कार्यम्। १० अतिरथी–an unrivalled warrior. ११ सोमक–son of सहदेव, king of मगध। The quarrel between अश्व and कर्ण is a creation of the fancy of नारायणभट्ट In the महाभारत we read thus–आचार्यपुत्रो मेधावी वाक्यज्ञो वाक्यमाददे। कर्णमेवाभिषेक्ष्याम सैनापत्येन भारत। एष दास्यति नः शूरः हताञ्शत्रून्युद्धदुर्मदः ॥ It shows that अश्व• himself recommends the appointment of कर्ण as the next commander-in-chief after द्रोण.

---

श्रीजयदेवकविरचितं प्रसन्नराघवम्।

न सद्यविद्या न च राजलक्ष्मीस्तथा यथेयं कविता कवीनाम्।
लोकोत्तरे पुंसि निवेदयमाना पुत्रीव हर्षं हृदये करोति ॥१॥

मौर्वी धनुस्तनुरियं च बिभर्ति मौञ्जीं
बाणाः कुशाश्च विलसन्ति करे सितास्याः।
धारोज्ज्वलः परशुरेष कमण्डलुश्च
तद्वीरशान्तरसयोः किमयं विकारः ॥२॥

आर्य, किं पुनरिदं ब्रह्मक्षत्रवर्णान्तरं चित्रमिव स्फुरति।

राम:—वत्स, न विदितं ते। नन्वयं स भगवान्भार्गवः।

लक्ष्मण:—नहि विस्मयनीयशीलोऽयं भगवान्।

राम:—विस्मयनीयशीलानां शिखामणिरिति वक्तव्यम्।

(उभौ परिक्रामतः।)

राम:—(अञ्जलिं बद्ध्वा।) भगवन्, भृगुकुलमौलिमाणिक्य, एष मातुलस्य मे प्रणामः।

जामदग्न्यः—समरविजयी भूयाः।

राम:—भगवन्, अनुगृहीतोऽस्मि।

भार्गवः—(स्वगतम्। सकरुणम्।)

रामे चन्द्राभिरामे विनयवति शिशौ किं प्रकुप्यातिमात्रं

(विमृश्य। सक्रोधम्।)

हुं चापं चन्द्रमौलेश्चपलमतिरसाविक्षुदण्डं बभञ्ज।

(पुनः सानुक्रोशम्।)

बाला वैधव्यदीक्षां जनकनृपसुता नार्हतीयं मदस्त्रात्

(पुनर्विचिन्त्य। सामर्षम्।)

आः शान्तो मे कुठारः कथमयमधुना रेणुकाकण्ठशत्रुः

(प्रकाशम्।) दाशरथे, इयमतो मे त्वयि समुदाचारानुसारिणी

वाग्वृत्तिरेव ।

रामः—(विहस्य ।) मनोवृत्तिस्तु कीदृशी ।

भार्गवः—तव बाह्वोर्मधुना समानैः रुधिरैः कठिनं कुठारमाराधयामि।

रामः—भगवन्, निग्रहानुग्रहयोः स्वाधीनोऽयं जनः । परं ते कोप बीजं ज्ञातुमिच्छामि।

भार्गवः—अहो दर्पान्धता । ननु रे न भग्नं त्वया जगद्गुरुशरासनम् ।

रामः—भगवन्, अलीकलोकवार्तया निरपराधे मयि मुधा कोप-कलंकितोऽसि ।

भार्गवः— तत्किं स्वस्ति हरकार्मुकाय । रामः—नहि नहि ।

भार्गवः—तत्कथं निरपराधोऽसि ।

रामः—मया स्पृष्टं न वा स्पृष्टं कार्मुकं पुरवैरिणः ।
भगवन्नाहमत्रैवेदमभज्यत करोमि किम् ॥४॥

भार्गवः—आ कथं रे चन्दनदिग्धं नाराचं निधाय हृदयं मे शीतलयसि । तदलमनेन । (कुठारमुद्यम्य ।)

हे राम कामरिपुकार्मुककर्मपात—
संजातपातक तवैष कठोरधारः ।
सीताकरव्यतिकरप्रतिकूलबन्धुः
कण्ठं पुरा विशतु निष्करुणः कुठारः ॥५॥

तत्प्रवीरो भव ।

जामदग्न्य —आ कथं मामपि प्रणतिपात्रं ब्राह्मणमात्रमिव मन्यसे। कथं क्षत्रियजातिनिर्वर्त्तो ब्राह्मणजाति तृणाय मन्यसे। तदिदानीमावयो का गरीयसीति संग्रामतुलैव निर्णेष्यते।

रामः—भो ब्रह्मन्भवता समं न घटते संग्रामवार्ताऽपि नः।
सर्वे हीनबला वयं बलवतां यूयं स्थिता मूर्धनि।

लक्ष्मण —जामदग्न्य, एवमेतत्।
यस्मादेकगुणं शरासनमिदं सुव्यक्तमुर्वीभुजा-
मस्माकं भवतां पुनर्नवगुणं यज्ञोपवीतं बलम् ॥७॥

राम —वत्स, अलमिह माननीये मुनौ दुर्विनयवैदग्ध्येन।

जामदग्न्यः—अस्य को दोष ।
क्षात्रैर्लुप्तजुचाशुकैः परिवृतं प्राचीनमेषां नृपं
नाहिंसीद्यदसौ कुठारहतकस्तस्यैतदुज्जृम्भितम्।
क्षत्रारीक्यचान्वयप्रणयिना क्षत्राधमानामिमा
दुर्वाचः प्रविशन्ति मे श्रवणयोधिक् क्षत्रगोत्रे कृपाम् ॥८॥

राम —अलमिह क्षीरकण्ठे कठोरकोपतया। तत्क्षम्यताम्।

जामदग्न्य —आ, किमुच्यते क्षीरकण्ठ इति। विषकण्ठ खल्वसौ।

लक्ष्मण —भगवन्, शितिकण्ठशिष्येण विशेषणं क्षन्तव्यम्।

जामदग्न्य —आ, कथं विषकण्ठनामसाम्येन त्वमपि मे गुरु।

लक्ष्मण —(सहस्य।) भगवन्, अन्याभिसन्धानेन मयेदमुक्तम्।
पश्यतु। किरीटमधिरूढेऽपि बाले मालेयरोचिषि।
शितिकण्ठस्य किं चित्ते धत्ते कोपाङ्कुरं पदम् ॥९॥
तद्भवांस्तदन्तेवासिनि विशेषणं क्षन्तुमर्हति।

जामदग्न्यः—(स्वगतम्।) अहो अस्य क्षत्रियवटोर्वाक्यपरिपाटीपाटवम्। भवतु। (प्रकाशम्।) तदिदं क्षान्तमेव मया। अयं तु न क्षमते प्रकृतिकठोरः कुठारः। शीलं न वेत्सि कथमस्य परशोः।

यत्र क्रामति संगरांगणभुवं दुर्वारधाराञ्चल-
क्षुण्णक्षत्रकिशोरकण्ठरुधिरैर्नीरेणुका भूरभूत्।
तादृग्धीरवरस्वयंवरपरस्वर्लोककन्याकर-
क्रीडापुष्करदामरेणुभिरभूद् वीरेव रेणूत्कटा ॥१०॥

लक्ष्मणः—भगवन्, एतत्सत्यम्। यत्किल भवत्कुठारधाराचलविलसितेन नीरेणुका भूरभूदिति।

जामदग्न्यः—(स्वगतम्।) आः कथं रेणुकावृत्तान्तेन मर्म विध्यति। भवतु। (प्रकाशम्।) अये क्षत्रियपोत, अलमिह निरपराधे भवति मुधा परश्वधपातेन। तदयं मे प्रकृतिकठोरभाषिणं भवत्कण्ठमेव शातयति कुठारः। (नेपथ्ये।)

अये जामदग्न्य, कथमतिप्रगल्भसे। तदिदमिदानीं भवच्छासनाय शरासनमानीयते।

जामदग्न्यः—(विहस्य।) कथमयं जनकः। (उच्चैः।) अये याज्ञवल्क्यशिष्य, किं भवतः शरासनेन। पद्मासनमेवावलम्बस्व। अलं भवता। एतावेव तावत्क्षत्रियस्फुलिंगौ निर्वापयामि।

रामः—प्रसीद त्वं रोषाद्विरम कुरु मे चेतसि गिरं
चिरं यच्चायासैर्बहुभिरिह वारैर्जितमभूत्।
यशोवित्तं वृत्तं कितव इव विक्षोभतरलं
त्वदेतस्मिन्द्वारे भृगुतिलक मा हारय मुधा ॥११॥

जामदग्न्य —कथं रे हारयिष्यामि (विमृश्य ।) अथवा ।
किं नाम वाङ्मत्सरपण्डितेषु युष्मासु वाणी प्रचुरा: प्रयुज्ते ।
बाणान्रिपुप्राणहरान्मदीयान्सर्वेऽपि यूयं सहिता सहध्वम्॥१२
राम:—निमन्त्र्यैनम्नहमेव सहिष्ये ।
जामदग्न्य —बालोऽसि त्वम् । तव गुरु कौशिकोऽपि मन्नारायण
याद्भगवत पद्मासनाद् ब्राह्मा तनूमयाचत ।
राम: —कथ भगवन्त विश्वामित्रमधिक्षिपसि । तदत पर न सहिष्ये।
अये जामदग्न्य,

> त्र्यक्षकोदण्ड कुलिशकठिन भग्नमेतेन भग्न
> भग्न शल्य तव हृदि महद्भग्नमेतावता किम् ।
> त्र्यक्ष वा भवतु यदि वा नाम नारायणीय
> नैतत्किंचिद्गणयति स मे दुर्मदो दुर्विलास ॥१३॥

जामदग्न्य:—(सहर्षम् ।) साधु रे क्षत्रियपोत, साधु । यत्किल जाम दग्न्यनाम्नश्चण्डधाम्न पुरत खद्योत इव विद्योतसे। किमात्थ रे, किमात्थ ।

राम —(तदेव पठति ।) नन्विद भूयोऽप्युच्यते । (पुनस्तदेव पठति ।)
जामदग्न्य —साधु स्मारितोऽस्मि । राम:—किं तत् ।
जामदग्न्य:—इद तद्विष्णो कार्मुकम् ।
राम —पर्यङ्केदक्रोडे मीडित येन शार्ङ्गिण । तदेतत् ।
जामदग्न्य —अथ किं यदि शक्तोऽसि गृहाण विगृहाण वा॥१४
राम —गृह्णामि ।

तत परशुरामेण दत्त भगवतो गरुडध्वजस्य कार्मुकमपि

रामेण सहेलं चक्रीकृतम्। तेन सन्तुष्टः परशुरामो वनं जगाम।

यदा सदारो रामः स्वजनैः सहायोध्यां गतस्तदा तमभिषेक्तुं कृतमनोरथं दशरथमेत्य कैकेयी प्रथमं तावदिदमुक्तवती :

इदमेव नरेन्द्राणां स्वर्गद्वारमनर्गलम्।
यदात्मनः प्रतिज्ञा च प्रजा च परिपाल्यते ॥१५॥

चरमं च-त्वया देयं यन्मे द्वयमभिहितं देहि तदिदं
वनं कौसल्येयो विशतु युवराजोऽस्तु भरतः।
इतीदं कैकेय्या वचनमधिगम्याकुलमतेः
पितुः पादौ नत्वा मुदितहृदयोऽसौ वनमगात् ॥१६॥

तदानीं सीतालक्ष्मणावपि रामेण सह वनं गतौ। तत्र रावणः कापट्येन सीतां हृतवान्। किन्तु—

प्रायो दुरन्तपर्यन्ताः संपदोऽपि दुरात्मनाम्।
भवन्ति हि सुखोदर्का विपदोऽपि महात्मनाम् ॥१७॥

ततः सीताविरहविह्वलो रामभद्रः सौमित्रिणा धार्यमाण ऋष्यमूकं गतः। तत्र रामचन्द्रेणात्मानं सुग्रीवं च समर्पयता हनूमता तथा व्यवसितं यथा वालिपालितापि कपिराज्यलक्ष्मीः सुग्रीवमनुसंक्रान्ता। ततः सुग्रीवेणापि स्थाने स्थाने दिनमणेर्वधूटीं सीतां विचिनुतेत्यादिश्य दिशि दिशि कपिभटा नियुक्ताः। तेषामेकतमो हनूमानशोकवने दुःखितां सीतां दृष्टवान्। स रावणस्य कुमारमक्षं हत्वा, लंकां च दग्ध्वा रामं समागतः।

अथैकदा विभीषणस्य करात्सकौतुकं लिखिताक्षरपंक्तिपत्रमेकं गृहीतं लंकेश्वरेण वाचितं च—

उदर्कभूतिमिच्छद्भिः सद्भिः खलु न दृश्यते।
चतुर्थीचन्द्रलेखेव परस्त्रीभालपट्टिका ॥ १८ ॥

ततो विहस्यैव लङ्केश्वरेणोक्तम्—नूनं केनापि भीरुणा भाषित मेतत्। स्यात हि यत्किम्—

परस्त्रीभालपट्टेषु कुम्भेषु परदन्तिनाम्।
निपतन्ति न भीरूणां दृष्टय शरवृष्टयः ॥इति॥१९॥

नात्र विस्मय कार्यं। यतो निर्मचित्तवृत्तिभित्तिभूमिकानुसारिणी वाक्चित्राणि लोकस्य। ततो विभीषणेन लङ्केश्वरं विहाय राम एव समाश्रित। तत समरे वीर कुम्भकर्ण समरकण्ठकौतुकी मेघनादश्च दशरथसुनयोर्दारुणे बाणवह्नौ पतगाविव पञ्चत्व गतौ, धूलीच्छटापरिधूसरो दशमुखश्च भूमौ पतित। तत सीतया लक्ष्मणेन च सह कपिकुञ्जरै राक्षसशार्दूलैश्च परिवृतो रामोऽयोध्यामागत। एव रामेण—

प्राप्ता निर्भरसुप्रसिर्निजगुणैराज्ञा पितु पालिता
सुग्रीवश्च विभीषणश्च परमां राज्यश्रिय प्रापितौ॥
सग्रामे दशकन्धरः सुररिपुर्नीतो यशःशेषता
दृष्टो बन्धुजनश्च हर्षविगलद्बाष्पोल्लसल्लोचन ॥ २० ॥

---

Notes —मौर्वी—ज्या—A bow string मौञ्जीत्व—The triple cord of munja grass. मौलि m —मस्तक n। निग्रह m—दण्ड m। अनुग्रह m —कृपा f (४) पुरवैरिण —शिवस्य। प्रणति —नमस्कार, नमस्कृति। (७) उर्वीभुजाम् —नृपाणाम्। (८) नारीकवच-सूर्यवंश्यो नृप —A grand son of सौदास, and a son of अश्मक

स्वागतं तपोधनायाः । (ततः प्रविशत्यध्वगवेषा तापसी ।)

तापसी—अये वनदेवतेयं फलकुसुमपल्लवार्घ्येण मामुपतिष्ठते ।

(प्रविश्य ।) वनदेवता—(अर्घ्यं विकीर्य ।)

यथेच्छं भोग्यं वो वनमिदमयं मे सुदिवसः
सतां सद्भिः संगः कथमपि हि पुण्येन भवति ।
तरुच्छाया तोयं यदपि तपसो योग्यमशनं
फलं वा मूलं वा तदपि न पराधीनमिह वः ॥४॥

तापसी—किमत्रोच्यते ।

प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥५॥

(उपविशति ।)

वनदेवता—कां पुनरत्रभवतीमवगच्छामि ।

तापसी—आत्रेय्यस्मि ।

वनदेवता—आर्ये आत्रेयि, कुतः पुनरिहागम्यते । किं प्रयोजनो वा दण्डकारण्यप्रवेशस्य ।

आत्रेयी—

अस्मिन्नगस्त्यप्रमुखाः प्रदेशे
भूयांस उद्गीथविदो वसन्ति ।
तेभ्योऽधिगन्तुं निगमान्तविद्यां
वाल्मीकिपार्श्वादिह पर्यटामि ॥६॥

वनदेवता—यदा तावदन्येऽपि मुनयस्तमेव हि पुराणब्रह्मवादिनं प्राचेतसमृषिं ब्रह्मपारायणायोपासते तत्कोऽयमार्याया दीर्घप्रवासप्रयासः ।

आत्रेयी—तत्र महानध्ययनप्रत्यूह इत्येष दीर्घप्रवासोऽङ्गीकृतः ।

वनदेवता—कीदृशः ।

आत्रेयी—तस्य भगवतः केनापि देवताविशेषेण सर्वप्रकाराद्भुतं स्तन्यत्यागमात्रके वयसि वर्तमानं दारकद्वयमुपनीतम् । तयैव च देवतया तयोः कुशलवाविति नामनी प्रभावश्चाख्यातः ।

वनदेवता—कीदृशः प्रभावः ।

आत्रेयी—तयोः किल सरहस्यानि जृम्भकास्त्राण्याजन्मसिद्धानि । न ह्येताभ्यामतिप्रदीप्तप्रज्ञामेधाभ्यामस्मदादेः सहाध्ययनयोगोऽस्ति । यतः—

वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे<br>
न च खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा ।<br>
भवति च पुनर्भूयान्भेदः फलं प्रति तद्यथा<br>
प्रभवति शुचिर्बिम्बग्राहे मणिर्न मृदां चयः ॥७॥

तस्मादयं तत्र हि महानध्ययनप्रत्यूह इति ।

वनदेवता—युज्यते ।

आत्रेयी—विश्रान्तास्मि भद्रे । इदानीमगस्त्याश्रमस्य पन्थानं ब्रूहि ।

वनदेवता—इतः पञ्चवटीमनुप्रविश्य गम्यतामनेन गोदावरीतीरेण ।

आत्रेयी—(सास्रम् ।) अप्येतत्तपोवनम् । अप्येषा पञ्चवटी । अपि सरिदियं गोदावरी । अपि जनस्थानवनदेवता वासन्ती त्वम् ।

वनदेवता—अस्त्येतत्सर्वम् । आत्रेयी—हा वत्से जानकि ।

स एष ते वल्लभबन्धुवर्गः<br>
प्रासंगिकीनां विषयः कथानाम् ।

त्वां नामशेषामपि दृश्यमानः
प्रत्यक्षदृश्यमिव नः करोति ॥८॥

वासन्ती—(सभयम्। स्वगतम्।) कथं नामशेषामित्याह। (प्रकाशम्) आर्ये किमत्याहितं सीतादेव्याः।

आत्रेयी—न केवलमत्याहितं सापवादमपि। (कर्णे।) एवमेवम्।

वासन्ती—अहह दारुणो दैवनिर्घातः। आर्ये आत्रेयि, अथ तस्मादरण्यात्परित्यज्य निवृत्ते लक्ष्मणे सीतादेव्याः किं वृत्तमिति काचिदस्ति प्रवृत्तिः।

आत्रेयी—नहि नहि।

वासन्ती—अथ स राजा किमाचारः संप्रति।

आत्रेयी—तेन राज्ञा क्रतुरश्वमेधः प्रक्रान्तः।

वासन्ती—हा धिक् परिणीतमपि।

आत्रेयी—शान्तं पापम्। नहि नहि।

वासन्ती—का तर्हि यज्ञे सहधर्मचारिणी।

आत्रेयी—हिरण्मयी सीताप्रतिकृतिः।

वासन्ती—हन्त भोः। वज्रादपि कठोराणि मृदूनि कुसुमादपि।
लोकोत्तराणां चेतांसि को नु विज्ञातुमर्हति ॥९॥

आत्रेयी—विसृष्टश्च वामदेवाभिमन्त्रितो मेध्योऽश्वः। उपकल्पिताश्च तस्य यथाशास्त्रं रक्षितारः। तेषामधिष्ठाता च लक्ष्मणात्मजश्चन्द्रकेतुरनुप्रहितः।

वासन्ती—(सस्नेहकौतुकास्रम्।) कुमारलक्ष्मणस्यापि पुत्रः। हन्त मातर्जीवामि।

आत्रेयी—अत्रान्तरे ब्राह्मणेन मृतं पुत्रमुत्क्षिप्य राजद्वारे सोरस्ताडमब्रह्मण्यमुद्घोषितम्। ततो न राजापचारमन्तरेण प्रजानामकालमृत्युः संचरतीत्यात्मदोषं निरूपयति करुणामये रामभद्रे सहसैवाशरीरिणी वागुदचरत्।

> शम्बूको नाम वृषलः पृथिव्यां तप्यते तपः।
> शीर्षच्छेद्यः स ते राम तं हत्वा जीवय द्विजम् ॥१०॥

वासन्ती—शम्बूको नाम धूमपः शूद्रोऽस्मिन्नेव जनस्थाने तपश्चरति। तदपि नाम रामभद्रः पुनरपीदं वनमलंकुर्यात्।

आत्रेयी—भद्रे गम्यतेऽधुना।

वासन्ती—आर्ये, एवमस्तु। कठोरीभूतस्तु दिवसः। (इति परिक्रम्य निष्क्रान्ते।) (ततः प्रविशति पुष्पकस्थो रामः।)

रामः— हे हस्त दक्षिण मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम्।
रामस्य बाहुरसि निर्भरगर्भखिन्न—
सीताविवासनपटोः करुणा कुतस्ते ॥११॥

शम्बूकः—यद्देव आज्ञापयति (इति निष्क्रान्तः ।)

(प्रविश्य सम्भ्रान्ता ।) वासन्ती—क्व देवो रघुनन्दनः । जयतु जयतु देवः ।

रामः—(निरूप्य ।) कथं देव्याः प्रियसखी वासन्ती ।

वासन्ती—ददतु तरवः पुष्पैरर्घ्यं फलैश्च मधुश्च्युतः
स्फुटितकमलामोदप्रायाः प्रवान्तु वनानिलाः ।
कलमविरलं रज्यत्कण्ठाः क्वणन्तु शकुन्तयः
पुनरिदमयं देवो रामः स्वयं वनमागतः ॥१३॥

रामः—एहि सखि वासन्ति नन्वितः स्थीयताम् ।

वासन्ती—(उपविश्य सास्रम् ।) महाराज, अपि कुशलं कुमारलक्ष्मणस्य ।

रामः—(अश्रुतिमभिनीय ।) करकमलवितीर्णैरम्बुनीवारशष्पै-
स्तरुशकुनिकुरङ्गान्मैथिली यानपुष्यत् ।
भवति मम विकारस्तेषु दृष्टेषु कोऽपि
द्रव इव हृदयस्य प्रस्तरोद्भेदयोग्यः ॥१४॥

वासन्ती—महाराज, ननु पृच्छामि अपि कुशलं कुमारलक्ष्मणस्येति।

रामः—(आत्मगतम् ।) अये महाराजेति निष्प्रणयमामन्त्रणपदं, सौमित्रिमात्रे च बाष्पस्खलिताक्षरः कुशलप्रश्नः । तथा मन्ये विदितसीतावृत्तान्तेयमिति । (प्रकाशम् ।) आः कुशलं कुमारस्य ।

वासन्ती—(रुदती ।) अयि देव, किं परं दारुणः खल्वसि ।
त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव शान्तमथवा किमिहोत्तरेण ॥१५॥ (इति मूर्च्छति)

वासन्ती—महानयं व्यतिकरोऽस्माकं प्रसादः। गमनं पुनर्यथा कार्यहानिर्न भवति तथास्ताम्।

रामः—अयि विमानराज इत इतः। (इति निष्क्रान्तः।)

अथ यदा लक्ष्मणो रामस्याज्ञया सीतां वने त्यक्तवांस्तदा रामस्य गुरुजन ऋष्यशृङ्गाश्रम आसीत्। ऋष्यशृङ्गस्य द्वादशवार्षिकं सत्रं परिसमाप्तम्। तेन च संपूज्य विसर्जिता गुरवः। ततो भगवत्यरुन्धती नाहं वधूविरहितामयोध्यां गमिष्यामीत्याह। तदेव राममातृभिरनुमोदितम्। तदनुरोधाद्भगवतो वसिष्ठस्य परिशुद्धा वाचो वाल्मीकितपोवनं गत्वा तत्र वत्स्याम इति। ततोऽरुन्धतीपुरस्कृतान्महाराजदशरथस्य दारानधिष्ठाय भगवान्वसिष्ठो वाल्मीकेराश्रमं प्राप्तः। राजा जनकोऽपि चिरंतनप्रियसुहृदं भगवन्तं प्राचेतसं द्रष्टुं तत्रागतः। तत्र ते सर्वे सम्बन्धिनो मिलिता आश्रमस्थं लवं च दृष्टवन्तः। तत्राश्रमस्याभोगे बटुभिः सह रममाणेन लवेन रामस्याश्वमेधीयस्तुरगो बद्धः। स च लवश्चन्द्रकेतोः सैनिकानां प्रमाथं कृत्वा 'किं नु भवतस्तातप्रतापोत्कर्षेऽप्यमर्ष' इति वदन्तं चन्द्रकेतुमाह।

लवः—यत्पुनश्चन्द्रकेतो वदसि किं नु भवतस्तातप्रतापोत्कर्षेऽप्यमर्ष इति तत्पृच्छामि किं व्यवस्थितविषयः क्षत्रधर्म इति।

सुमन्त्रः—नैव खलु जानासि देवमैक्ष्वाकं येनैवं वदसि। तद्विरमातिप्रसंगात्।

> सैनिकानां प्रमाथेन सत्यमोजायितं त्वया।
> जामदग्न्यस्य दमने नहि निर्बन्धमर्हसि ॥२०॥

लवः—(सहासम्।) आर्य जामदग्न्यस्य दमनः स राजेति कोऽयमुच्चैर्वादः।

सिद्धं ह्येतद्वाचि वीर्यं द्विजानां
बाह्वोर्वीर्यं यत्तु तत्क्षत्रियाणाम् ।
शस्त्रग्राही ब्राह्मणो जामदग्न्य—
स्तस्मिन्दान्ते का स्तुतिस्तस्य राज्ञः ॥२१॥

चन्द्रकेतुः—(सोन्मादमिव ।) आर्य सुमन्त्र, कृतमुत्तरोत्तरेण ।

कोऽप्येष संप्रति नवः पुरुषावतारो
वीरो न यस्य भगवान्भृगुनन्दनोऽपि ।
पर्याप्तसप्तभुवनाभयदक्षिणानि
पुण्यानि तातचरितान्यपि यो न वेद ॥२२॥

लवः—कोहि रघुपतेश्चरितं महिमानं च न जानाति। यदि नाम किंचिदस्ति वक्तव्यम् । अथवा शान्तम् ।

वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु किं वर्ण्यते
सुन्दस्त्रीमथनेऽप्यकुण्ठयशसो लोके महान्तो हि ते ।
यानि त्रीण्यपराङ्मुखान्यपि पदान्यासन्खरायोधने
यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः ॥२३॥

चन्द्रकेतुः—आः तातापवादभिन्नमर्याद, अति हि नाम प्रगल्भसे ।

लवः—अये मय्येव भ्रुकुटीधरः संवृत्तः । तदेहि विमर्दक्षमां भूमिमवतराव । (इति निष्क्रान्ताः सर्वे ।)

ततस्तयोः कुमारयोर्दारुणं युद्धं समापेदे । किन्तु शम्बूकवधात्प्रतिनिवृत्तो रघुपतिर्दूरत एव मधुरस्निग्धवचनप्रतिषिद्धयुद्धव्यापारस्तयोः कुमारयोरन्तरे विमानवरमवातारयत् ।

(ततः प्रविशति रामो लवः प्रणतश्चन्द्रकेतुश्च ।)

रामः—(पुष्पकादवतीर्य, सस्नेहास्रं परिष्वज्य ।) चन्द्रकेतो, अपि नाम कुशलं तव दिव्यास्त्रवरदेहस्य ।

चन्द्रकेतुः—कुशलमत्यद्भुतक्रियस्य प्रियदर्शनस्य लवस्य लाभाभ्युदयेन । तद्विज्ञापयामि मामिव विशेषेण वा मत्तः स्निग्धेन चक्षुषा पश्यत्वमुं तातः ।

रामः—(लवं निरूप्य।) दिष्ट्या अतिगम्भीरमधुरकल्याणाकृतिरयं वयस्यो वत्सस्य । तत्किमयमेकपद एव मे दुःखविश्रामं ददात्युपस्नेहयति च कुतोऽपि निमित्तादन्तरात्मानम् । अथवा स्नेहश्च निमित्तसव्यपेक्ष इति विप्रतिपिद्धमेतत् । तथाहि

> व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
> र्न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते ।
> विकसति हि पतङ्गस्योदये पुण्डरीकं
> द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥२४॥

लवः—चन्द्रकेतो, क एते । चन्द्रकेतुः-प्रियवयस्य, ननु तातपादाः

लवः—ममापि तर्हि धर्मतस्तथैव यतः प्रियवयस्य इति भवतोक्तम् । किन्तु चत्वारः खलु भवतामेवंव्यपदेशभागिनस्तत्रभवन्तो रामायणकथापुरुषाः । तद्विशेषं ब्रूहि ।

चन्द्रकेतुः—ननु ज्येष्ठतातपादा इत्यवेहि ।

लवः—(सोल्लासम् ।) कथं रघुनाथ एव । दिष्ट्या सुप्रभातमद्य यदयं देवो दृष्टः । (सविनयकौतुकं निर्वर्ण्य ।) तात, प्राचेतसान्तेवासी लवोऽभिवादयते ।

रामः—आयुष्मन्, एह्येहि । (इति सस्नेहमालिङ्ग्य ।) अयि वत्स, कृतं

कृतमतिविनयेन । अनेकवारमपरिश्लथं परिष्वजस्व माम् ।

(ततः प्रविशति कुशो निकटं च परिक्रमति ।)

रामः—कोऽप्यस्मिन्क्षत्रियपोतके पौरुषातिरेकः ।

दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद्गुरुतां दधानो
वीरो रसः किमयमेत्युत दर्प एव ॥२५॥

लवः—अयमसौ मम ज्यायानार्यः कुशो नाम भरताश्रमात्प्रतिनिवृत्तः । (कुशमुपसृत्य) जयत्वार्यः ।

कुशः—नन्वायुष्मन्, किमियं वार्ता युद्ध युद्धमिति ।

लवः—यत्किञ्चिदेतत् । आर्यस्तु दृप्तभावमुत्सृज्य विनयेन वर्तताम् । यतोऽत्र देवो रघुपतिस्तिष्ठति । स च स्निह्यत्यावयोरुत्कण्ठते च युष्मत्संनिकर्षस्य ।

कुशः—(निर्वर्ण्य ।) अहो प्रासादिकं रूपमनुभावश्च पावनः ।
स्थाने रामायणकविर्देवीं वाचमवीवृधत् ॥२६॥

(उपसृत्य ।) तात प्राचेतसान्तेवासी कुशोऽभिवादयते ।

रामः—एह्येह्यायुष्मन् ।

अमृताध्मातजीमूतस्निग्धसंहननस्य ते ।
परिष्वङ्गाय वात्सल्यादयमुत्कण्ठते जनः ॥२७॥

(इति परिष्वजते ।)

अत्रान्तरे वसिष्ठो वाल्मीकिर्दशरथमहिष्यो जनकश्च शिशुकलहमाकर्ण्यारुन्धत्या सह सभयास्त्वरितमनसस्तत्रागच्छन् । रामं च कुशलवाभ्यां सह दृष्टवन्तः । ततो भगवता वाल्मीकिना सकलनिम-

प्सरोभिः प्रयुज्यमानां द्रष्टुं सब्रह्मक्षत्रपौरजानपदाः प्रजाः सह रामादिभिरुपनिमन्त्रिताः। तत्र नाटके—

सूत्रधारः—विश्वंभरात्मजा देवी राज्ञा त्यक्ता महावने।
प्राप्तप्रसवमात्मानं गङ्गादेव्यां विमुञ्चति ॥१८॥
(इति निष्क्रान्तः।)

[ततः प्रविशत्युत्सङ्गितैकैकदारकाभ्यां पृथिवीगङ्गाभ्यामवलम्बिता सीता।]

देव्यौ—समाश्वसिहि कल्याणि दिष्ट्या वैदेहि वर्धसे।
अन्तर्जले प्रसूतासि रघुवंशधरौ सुतौ ॥१९॥

सीता—(समाश्वस्य।) दिष्ट्या दारकौ प्रसूतास्मि। भगवति, कात्वमियं च। पृथिवी—इयं ते श्वशुरकुलदेवता भागीरथी।

सीता—भगवति नमस्ते। भागीरथी—इयं तु जननी ते विश्वंभरा।

सीता—हा अम्ब ईदृश्यहं त्वया दृष्टा।

पृथिवी—एहि पुत्रि। (इति सीतामालिङ्ग्य मूर्छति।)

भागीरथी—विश्वंभरापि नाम व्यथत इति जितमपत्यस्नेहेन। देवि भूतधात्रि, वत्से वैदेहि, समाश्वसिहि समाश्वसिहि।

पृथिवी—देवि, सीतां प्रसूय कथमाश्वसिमि।
सोढश्चिरं राक्षसमध्यवास-
स्त्यागो द्वितीयश्च सुदुःसहोऽस्याः।

भागीरथी—को नाम पाकाभिमुखस्य जन्तो—
र्द्वाराणि दैवस्य पिधातुमीष्टे ॥२०॥

पृथिवी—भगवति, युक्तमेतद्रामभद्रस्य।
न प्रमाणीकृतः पाणिर्बाल्ये बालेन पीडितः।
नाहं न जनको नाग्निर्नानुवृत्तिर्न संततिः ॥२१॥

भागीरथी—भगवति वसुंधरे, शरीरमसि संसारस्य। तत्किमसंविदानेव जामात्रे कुप्यसि।

पृथिवी—देवि, नित्यं प्रसन्नास्मि वः। किन्त्वापातदुःसहस्नेहसंवेगेनैवं ब्रवीमि। न पुनर्न जानामि सीतास्नेहं रामभद्रस्य।

दह्यमानेन मनसा दैवाद्वत्सां विहाय सः।
लोकोत्तरेण सत्त्वेन प्रजापुण्यैश्च जीवति ॥३२॥

सीता—(रुदती कृताञ्जलिः।) नयतु मामात्मनोऽङ्केषु विलयमम्बा।

पृथिवी—एहि वत्से, पवित्रीकुरु रसातलम्। अथवा मन्नियोगतः स्तन्यत्यागं यावत्पुत्रयोरवेक्षस्व। परेण तु यथा ते रोचिष्यते।

भागीरथी—एवं तावत्। (इति निष्क्रान्ते देव्यौ सीता च।)

रामः—कथं विलय एव वैदेह्याः संपन्नः। (इति मूर्च्छति।)

लक्ष्मण—भगवन्वाल्मीके, परित्रायस्व परित्रायस्व। एष ते काव्यार्थः।

(नेपथ्ये।)

अपनीयतामातोद्यम्। भो भोः सजङ्गमस्थावराः प्राणभृतो मर्त्यामर्त्याः पश्यतेदानीं महर्षिणा भगवता वाल्मीकिनाऽभ्यनुज्ञातं पवित्रमाश्चर्यम्।

लक्ष्मणः—(विलोक्य।) मन्थादिव क्षुभ्यति गाङ्गमम्भो
व्याप्तं च देवर्षिभिरन्तरिक्षम्।
आश्चर्यमार्या सह देवताभ्यां
गङ्गामहीभ्यां सलिलादुदेति ॥३३॥ (पुनर्नेपथ्ये।)

अरुन्धति जगद्वन्द्ये गङ्गापृथ्व्यौ जुषस्व नौ।
अर्पितेयं तवाभ्यां सीता पुण्यव्रता वधूः ॥३४॥

(ततः प्रविशत्यरुन्धती सीता च।)

अरुन्धती—त्वरस्व वत्से वैदेहि मुञ्च शालीनशीलताम्।
एहि जीवय मे वत्सं प्रियस्पर्शेन पाणिना ॥३५॥

सीता—(ससाध्वसं स्पृशन्ती।) समाश्वसितु समाश्वसित्वार्यपुत्र।

राम—(समाश्वस्य सानन्दम्।) भो किमेतत्। (दृष्ट्वा सहर्षाद्भुतम्।) कथ देवी। (सलज्जम्।) अये अम्बा मेऽरुन्धती सर्वे च प्रहृष्यन्त ऋष्यशृङ्गशान्तादयोऽस्मद्गुरव।

अरुन्धती—भगवन्वाल्मीके, उपनीयेतामिमौ सीतागर्भसम्भवौ रामभद्रस्य पुत्रकौ कुशलवौ। (इति निष्क्रान्ता।)

रामलक्ष्मणौ—दिष्ट्या तथैवैतत्।

सीता—(सबाष्पाकुलम्।) कुत्र तौ पुत्रकौ मम। (ततः प्रविशति वाल्मीकि कुशलवौ च।)

वाल्मीकि—वत्सौ कुशलवौ, एष वां रघुपति पिता। एष लक्ष्मण कनिष्ठतात। एषा सीता जननी। एष राजर्षिर्जनको मातामह।

सीता—(सहर्षकरुणाद्भुतं विलोक्य।) कथ तात।

कुशलवौ—हा तात हा अम्ब हा मातामह।

रामलक्ष्मणौ—(सहर्षमालिङ्ग्य।) ननु वत्सौ पुण्यै प्राप्तौ स्थ।

सीता—एहि जात कुश, एहि जात लव, चिरस्य मा परिष्वजेथा पुनर्जन्मान्तरगता जननीम्।

कुशलवौ—(तथा कृत्वा।) धन्यौ स्व।

सीता—भगवन्, एषाहं प्रणमामि।

वाल्मीकि—वत्से, ईदृश्येव चिरं भूया। (रामं प्रति।) रामभद्र, उच्यतां किं ते भूय प्रियमुपकरोमि।

राम—अत परमपि प्रियमस्ति। तथापीदमस्तु–

पाप्मभ्यश्च पुनातु वर्धयतु च श्रेयांसि सेयं कथा
माङ्गल्या च मनोहरा च जगतो मातेव गङ्गेव च।
तामेतां परिभावयन्त्वभिनयैर्विन्यस्तरूपां बुधाः
शब्दब्रह्मविदः कवेः परिणतप्रज्ञस्य वाणीमिमाम् ॥३६॥



Notes -१ रक्षागृहम्–रामगृहावस्थानमात्र मूल दोषकथन-हेतु। २ आलर्कम्–अलर्कविष। ५ अनवगीत–अनिन्दित। अनुपधि निर्व्याजम्। ५ 'ओमित्युद्घातमुपासीत' इति वचनात्परस्मिन् ब्रह्मणि उद्घातदृष्टि कुर्वन्त। ब्रह्मपारायणाय वेदान्तरहस्याध्ययनाय। रामपवाद–रामदोष। ११ निर्भर पूर्ण। १३ मधुश्च्युतः–मधूनि श्चोतन्ति क्षरन्तीति। १५ अनुरुन्ध–अनुनीय। १८ कृन्तति–छिनत्ति। १९ परिवत्सर–संवत्सर। व्यतिकर–सम्पर्क। २० प्रसवेन प्रकृष्टविलासेन। निर्बन्ध–स्वभाव। २३ अकुण्ठवीर्य–अप्रतिहतवीर्य। भ्रुकुटिधर–कोपप्रयुक्तभ्रूभङ्गयुक्तवदन। विमर्दक्षमा युद्धयोग्य। निमित्तसम्पन्न–हेतुसम्पन्नः। २४ पतङ्गस्य सूर्यस्य। चन्द्रकान्त–शिलाविशेष। २७ अमृतास्मैत &c.–सुधापूरितमेघवत्स्निग्ध रहतम गात्र यस्य। ३० पिपासुमाप्ट रोद्धुं समर्थो भवति। ३१ वृत्ति–शीलम्। सतति–वंश। आतोद्यम्–वृत्तगीतसमुदाय। ३३ मन्थात् मन्थनात्। ३४ पुनस्त–जन्मोहि। ३५ दार्शनिकशीलता–अधृष्टस्वभावत्वम्। ३६ पाप्मभ्य–दुरितेभ्य। अभिनयैः &c–अभिनयविशिष्टा यो विन्यासो रचना वैशिष्ट्य च प्रतिपादकत्वरूप विन्यस्त विन्यासेन निरूपितं स्वरूपम्यस्याम् –cast in the form of a drama i e made fit to be represented on the stage.



The following drama is an introduction to the study of Kumarasambhava for which purpose the words of Kalidas are used as far as possible. In the regular form of a connected drama, diligent care has been taken to select such words as might least interrupt the effect of the charming Sanskrit tongue in which he wrote.

---

# अथ शिवप्रसादम् ।

## अथ प्रथमोऽङ्कः ।

कथयत कथमेषा मेनया विप्रदत्ता
शिव शिव गिरिपुत्री वृद्धकापालिकाय ।
इति वदति पुरन्ध्रीमण्डले सिद्धिलेश-
व्यपकृतधरवेषः पातु वः श्रीमहेशः ॥ १ ॥

(नान्द्यन्ते ।) सूत्रधारः—(नेपथ्याभिमुखमवलोक्य ।) प्रिये, इतस्तावत् ।

(प्रविश्य ।)

नटी—आर्यपुत्र, इयमस्मि । आज्ञापयतु नाथः ।

सूत्रधारः—प्रिये, अभिहितोऽस्मि विद्वज्जनसमुदायेन शिवप्रसादं नाम नाटकमस्मिञ्छिवरात्रीमहोत्सवे प्रयोक्तव्यमिति । तदारभ्यतां भगवन्तं महेश्वरमधिकृत्य काचित्स्तुतिः ।

(नेपथ्ये ।)

नमस्त्रिमूर्तये तुभ्यं प्राक्सृष्टेः केवलात्मने ।
गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥ २ ॥

नटी—(श्रुतिमभिनीय।) आर्यपुत्र, केऽपि कश्चिद् देव स्तुवन्तीति श्रूयते।

सूत्रधारः—(विचिन्त्य।) भवतु। ज्ञातम्। तारकाख्येन रक्षसा विप्रकृता इन्द्रादयो दिवौकसो भगवन्त ब्रह्माण स्तुवन्ति। तदावा मपि महर्षेर्भरतस्य तपोबलेन तत्र गच्छाव। (इति निष्क्रान्तौ।)

प्रस्तावना।

(तत प्रविशति बद्धाञ्जलिभिरि न्द्रादिभिर्देवै स्तूयमान आसनस्थो ब्रह्मा।)

देवा — नमस्त्रिमूर्तये तुभ्य प्राक्सृष्टे केवलात्मने।
गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥ २ ॥
त्वामामनन्ति प्रकृति पुरुषार्थप्रवर्तिनीम्।
तद्दर्शिनमुदासीन त्वामेव पुरुष विदु ॥
त्वमेव हव्य होता च भोज्य भोक्ता च शाश्वत।
वेद्य च वेदिता चासि ध्याता ध्येय च यत्परम् ॥ ४ ॥

ब्रह्मा—भो दिवौकस, स्वागत युष्मभ्यम्। हे वत्सा, युष्माक मुखानि पुरेवात्मीया द्युति कि न बिभ्रति। एतदिन्द्रस्य कुलिश कुण्ठिता श्रीव लक्ष्यते। प्रचेतस पाणौ पाशो मन्त्रेण हतवीर्यस्य पणिनो दैन्यमाश्रित। त्यक्तगदो भग्नशाखो द्रुम इव कुवेरस्य बाहु पराभव शसतीव। निस्तेजस्केन दण्डेन यमोऽपि भूमि विलिखन् मोघेऽप्यस्मिन्दण्डे निर्वाणालातलाघव कुरुते। लब्धप्रतिष्ठा अमी आदित्या, मरुतो, रुद्रा, अन्ये देवाश्च चित्रन्यस्ता इव प्रकामा लोकनीयता गता। अतो हे वत्सा, ब्रूत। केन दुःखेन यूय दुःखिता। किं च प्रयोजन युष्माकमागमनेन।

वाचस्पति —हे पितामह, प्रत्येक विनियुक्तात्मा भवान्सर्वं वेत्ति तथाप्यहं ब्रवीमि यदस्माकं पदं शत्रुभिराक्रान्तम्। यतः —

भवल्लब्धवरोदीर्णस्तारकाख्यो महासुरः।
उपप्लवाय लोकानां धूमकेतुरिवोत्थितः ॥५॥
तस्यानुग्रहापेक्षी त मुहुर्दूतहारितैः ।
अनुकूलयतीन्द्रोऽपि कल्पद्रुमविभूषणैः ॥६॥
इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम्।
शाम्येत्प्रत्युपकारेण नोपकारेण दुर्जनः ॥७॥

तद् हे विभो, तस्य तारकस्य शान्तये सुरसैन्यानां गोप्तारं सेनान्यं स्रष्टुमिच्छाम ।

ब्रह्मा—भो देवा, अयं वः कामः संपत्स्यते। कञ्चित्कालं प्रतीक्ष्यताम्। अपरं च—अस्य सेनान्यो विषयेऽहं सर्गव्यापारं न यास्यामि। यतः —

इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम्।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ॥८॥

तथापि तस्य राक्षसाधमस्य नाशायोपायं वः कथयामि। श्रूयताम्। शिववीर्यसमुत्पन्नः पुत्र एव हनिष्यति। अतः —

उमारूपेण ते यूयं संयमस्तिमितं मनः।
शम्भोर्यतध्वमाक्रष्टुमयस्कान्तेन लोहवत् ॥९॥

अनेनैवोपायेन युष्माकं कार्यसिद्धिर्भविष्यति।

महेन्द्रः—भगवन्, भवतो वचनं प्रमाणम्। वयमेवं करिष्यामः। आज्ञापयतु भवान्नो गमनाय।

ब्रह्मा—गच्छन्तु कार्यसिद्ध्यै। (इति निष्क्रान्ताः सर्वे।)

इति प्रथमोऽङ्कः।

---

अथ द्वितीयोऽङ्कः।

(ततः प्रविशतो देवदूतौ।)

प्रथमः—सखे, श्रुतं त्वया यत्तारकेण पीडिता दिवौकसस्तुरासाहं पुरोधाय स्वायंभुवं धामागच्छन्निति।

द्वितीयः—सखे श्रुतपूर्वोऽयं वृत्तान्तो मया। किन्तु न जानेऽस्माराधितो भगवान्स्वयंभूर्न वेति।

प्रथमः—न केवलं चिरंचिराराधितस्तस्य तारकहनकस्य विनाशायोपायोऽपि निर्दिष्टस्तेन भगवता।

द्वितीयः—कीदृशोऽयमुपायः।

प्रथमः—कथितं भगवता स्वयंभुवा। हे देवाः, शिववीर्यसमुत्पन्नः पुत्र एनं हनिष्यति। अत उमारूपेण शम्भोर्मन आक्रष्टुं यतध्वमिति।

द्वितीयः—उमारूपं कथं शिवमनो हरिष्यतीति न ज्ञायते मया। यतः स्वात्मारामे महेशं विषयमृगतृष्णा न भ्रमयति।

प्रथमः—यद्यपि तद्भवतु। किन्तु कामदेवस्य साहाय्येन सर्वं सिद्धं भविष्यतीति मन्यन्ते देवैः। अपरं च—

भ्रमयति मनसि विवेकी विदुषामपि शास्त्रसम्भवस्तावत्।
निपतन्ति दृष्टिविशिखा यावन्नेन्दीवराक्षीणाम्॥ १॥

द्वितीयः—एवमेव। तथापि स महेशो हि तमः पारे व्यवस्थितं

परं ज्योतिः । अतः कामद्वितीयमुमासौन्दर्यं शिवमनो हरिष्यती-
त्याशामोदकैरियं तृप्तिर्देवानाम् ।

प्रथमः—यद्वा तद्वा भवतु । मया तु यच्छ्रुतं तत्तुभ्यं कथितम् ।

(नेपथ्ये ।)

आज्ञापय ज्ञातविशेष पुंसां लोकेषु यत्ते करणीयमस्ति ।
अनुग्रहं संस्मरणप्रवृत्तमिच्छामि संवर्धितमाज्ञया ते ॥ २ ॥

द्वितीयः—सखे, कस्यायं स्वरः ।

प्रथमः—वयस्य, महेन्द्रेण स्मृतः पुष्पधन्वा तमुपतिष्ठत इति मे तर्कः । अत आवामपि तत्र गच्छाव । (इति निष्क्रान्तौ ।)

(इति शुद्धविष्कम्भः ।)

(ततः प्रविशति देवसभायामासनस्थो महेन्द्रः कृताञ्जलिश्च कामः ।)

कामः—(प्रणिपत्य ।)

आज्ञापय ज्ञातविशेष पुंसां लोकेषु यत्ते करणीयमस्ति ।
अनुग्रहं संस्मरणप्रवृत्तमिच्छामि संवर्धितमाज्ञया ते ॥ २ ॥

हे देवेश, वद, तवासम्मतः कः पुनर्भवक्लेशभयान्मुक्तिमार्गं प्रपन्नः । येन सः सुन्दरीणां कटाक्षैर्बद्धश्चिरं तिष्ठतु । हे वीर, प्रसीद । वज्रं विश्राम्यतु । मदीयैः शरैर्मोघीकृतबाहुवीर्यैः कतमः सुरारिः कोपस्फुरिताधराभ्यः स्त्रीभ्योऽपि बिभेतु । यतः—

तव प्रसादात्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा ।
कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥ ३ ॥

महेन्द्रः—कामदेव,

सर्वं सखे त्वय्युपपन्नमेतदुभे ममास्त्रे कुलिशं भवांश्च ।
वज्रं तपोवीर्यमहत्सु कुण्ठं त्वं सर्वतोगामि च साधकं च ॥ ४ ॥

अपरं च—

अवैमि ते सारमतः खलु त्वां कार्ये गुरुण्यात्मसमं नियोक्ष्ये।
व्यादिश्यते भूधरतामवेक्ष्य कृष्णेन देहोद्वहनाय शेषः ॥

काम—यद्येवं तदा कथयतु भवान्कस्य धर्माथौ पीडयामि।

महेन्द्रः—भूपाङ्कं बाणगतिमाशङ्क्य त्वया न कार्यं प्रतिपन्नस्त्वम्। इदानीमुच्चैर्द्विषा दन्तासुरामीप्सितमेतदेव निबोध। अमी हि देवा जयाय भवस्य वीर्यमस्वं मेनाप्रसूतिं इच्छन्ति। तदात्मने तस्मै भवान् हिमाद्रेस्तनुजां पार्वतीं रोचयितुं यतस्व। अपरं च—

सुरा समभ्यर्थयितार एते कार्यं त्रयाणामपि विष्टपानाम्।
चापेन ते कर्म न चातिहिंस्रमहो बतासि स्पृहणीयवीर्यः ॥

तस्मात्सिद्धये गच्छ। देवकार्यं च कुरु।

कामः—(प्रणम्य।) यथाज्ञापयति महेन्द्रः। यतिष्ये च कार्यसिद्धये।

(इति निष्क्रान्ताः सर्वे।)

(ततः प्रविशति ध्यानाम्बरस्थः शिवः। तं च पूजयन्ती पार्वती दूरे कथञ्चित्प्रपन्नः कामः।)

कामः—(सविस्मयम्।) अये शिवस्य चित्तमाक्रान्तमिति दुर्गविगाहिणी मे आशा। अथवा किमशक्यं मम बाणनिपातेन।

(निरीक्ष्य।) अये, इयं पार्वती मूर्ध्ना वृषभध्वजाय प्रणामं करोति। हरश्च चन्द्रोदयारम्भेऽम्बुराशिरिव किञ्चित्परिलुप्तधैर्यो बिम्बफलाधरोष्ठे उमामुखे लोचनानि व्यापारयति। अवसरोऽयं मम बाणनिपातस्य। (इति शिवे सम्मोहनं नाम बाणं मुञ्चति।)

शिवः—(सविस्मयम्।) को हेतुर्ममेन्द्रियक्षोभस्य। (दृष्ट्वा कामं दृष्ट्वा

प्रकाशम्।) रे दुष्टस्मर, अनुभव तव कर्मणः फलम्। (इति तृतीय-
नेत्राग्निना तं दहति। पश्चात्तादृश्यो भवति। पार्वती च पितृगृहं गच्छति।)

इति द्वितीयोऽङ्कः।

---

अथ तृतीयोऽङ्कः।

(ततः प्रविशतो मुनिकुमारौ।)

प्रथमः—भद्र, श्रुतं मया यत्पार्वत्यधुनास्मिन्वने तपः करोति। मृणा-
लिकापेलवांग्यास्तस्यास्तपसः किं कारणम्।

द्वितीयः—सखे, एवं किल श्रूयते। यत्पार्वती शंकरं पतिमिच्छति।
किन्तु स्थाण्वाश्रमे मनोभवं दहता पिनाकिना भग्नमनोरथा
मनसात्मनः सौन्दर्यं निन्दितवती।

इति शुद्धविष्कम्भः।

(नेपथ्ये।)

स्वागतमतिथये।

(ततः प्रविशति जटिलः।)

जटिलः—अये आतिथेयी पार्वती बहुमानपूर्वेण फलकुसुमपल्लवार्घ्येण मामुपतिष्ठते।

(प्रविश्य सखीद्वितीया पार्वती।)

पार्वती—(अर्घ्यं विकीर्य।) स्वागतमतिथये। किं प्रयोजनमत्रभवतोऽत्रागमनेन।

जटिलः—हे पार्वति, रूपं पापवृत्तये नेति यदुच्यते तद्वचोऽव्यभिचारि। तथा हि। हे उदारदर्शने, मृणालिकापेलवं स्वमंगं व्रतैरहर्निशं ग्लपयन्ती त्वं कठिनैः शरीरैरुपार्जितं तपस्विनां तपो दूरमधःकरोषि। तव शीलं चाधुना तपस्विनामप्युपदेशतां गतम्। अतस्तव दर्शनमेव ममागमनस्य प्रयोजनम्। अपरं च। तव तपो दृष्ट्वा वर्तते मे मनसि महत्कौतुकम्। यतः—

कुले प्रसूतिः प्रथमस्य वेधसस्त्रिलोकसौन्दर्यमिवोदितं वपुः।
अमृग्यमैश्वर्यसुखं नवं वयस्तपःफलं स्यात्किमतः परं वद॥
भवत्यनिष्टादपि नाम दुःसहान्मनस्विनीनां प्रतिपत्तिरीदृशी।
विचारमार्गप्रहितेन चेतसा न दृश्यते तच्च कृशोदरि त्वयि॥
अलभ्यशोकाभिभवेयमाकृतिर्विमानना सुभ्रु कुतः पितुर्गृहे।
पराभिमर्शो न तवास्ति कः करं प्रसारयेत्पन्नगरत्नसूचये॥
किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम्।
वद प्रदोषे स्फुटचन्द्रतारका विभावरी यद्यरुणाय कल्पते॥

प्रकाशम्।) रे दुष्टस्मर, अनुभव तव कर्मणः फलम्। (इति तृतीय-नेत्राग्निना तं दहति। तथाभादृश्यो भवति। पार्वती च पितृगृहं गच्छति।)

इति द्वितीयोऽङ्कः।

---

अथ तृतीयोऽङ्कः।

(ततः प्रविशतो मुनिकुमारौ।)

**प्रथमः**—भद्र, श्रुतं मया यत्पार्वत्यधुनास्मिन्वने तपः करोति। मृणालिकापेलवांग्यास्तस्यास्तपसः किं कारणम्।

**द्वितीयः**—सखे, एवं किल श्रूयते। यत्पार्वती शंकरं वरीतुमिच्छति। किन्तु स्थाण्वाश्रमे मनोभवं दहता पिनाकिना भग्नमनोरथा कृता सा मनसात्मनः सौन्दर्यं निन्दितवती। यतश्चारुता प्रियेषु सौभाग्यफला।

**प्रथमः**—ततस्ततः।

**द्वितीयः**—ततस्तं शंकरं तपःसाध्यं मत्वा, विविधान्याभरणानि वस्त्राणि च त्यक्त्वा, वल्कलं धृत्वा, मौञ्जीं बद्ध्वा पितुराज्ञया सास्मिन्नरण्ये तपः करोति। तत्तपो मुनीनामपि दुष्करम्। सा ग्रीष्मे दीप्तानामग्नीनां मध्ये, वर्षासु स्थण्डिले तिष्ठति, शीते च भवति सोदवासतत्परा। ऋषयोऽपि तां दिदृक्षवः सर्वदा तस्या उटजं गच्छन्ति। यतो धर्मवृद्धेषु वयो न समीक्ष्यते।

**प्रथमः**—भद्र, त्वया सत्यं कथ्यते। पश्य, कश्चिदजिनाषाढधरो ब्रह्ममयेन तेजसा ज्वलन्निव जटिलः पार्वत्या उटजं गच्छति। (उभौ पश्यतः।)

**द्वितीयः**—एवमेव। आवामपि गुरोराश्रमं गच्छाव। (इति निष्क्रान्तौ।)

इति शुद्धविष्कम्भः।

(नेपथ्ये।)

स्वागतमतिथये।

(ततः प्रविशति जटिलः।)

जटिलः—अये आतिथेयी पार्वती बहुमानपूर्वेण फलकुसुमपल्लवार्घ्येण मामुपतिष्ठते।

(प्रविश्य सखीद्वितीया पार्वती।)

पार्वती—(अर्घ्यं विकीर्य।) स्वागतमतिथये। किं प्रयोजनमत्रभवतोऽत्रागमनेन।

जटिलः—हे पार्वति, रूपं पापवृत्तये नेति यदुच्यते तद्वचोऽव्यभिचारि। तथा हि। हे उदारदर्शने, मृणालिकापेलवं स्वमंगं व्रतैरहर्निशं ग्लपयन्ती त्वं कठिनैः शरीरैरुपार्जितं तपस्विनां तपो दूरमधः करोषि। तव शीलं चाधुना तपस्विनामप्युपदेशतां गतम्। अतस्तव दर्शनमेव ममागमनस्य प्रयोजनम्। अपरं च। तव तपो दृष्ट्वा वर्तते मे मनसि महत्कौतुकम्। यतः—

कुले प्रसूतिः प्रथमस्य वेधसस्त्रिलोकसौन्दर्यमिवोदितं वपुः।
अमृग्यमैश्वर्यसुखं नवं वयस्तपः फलं स्यात्किमतः परं वद॥
भवत्यनिष्टादपि नाम दुःसहान्मनस्विनीनां प्रतिपत्तिरीदृशी।
विचारमार्गप्रहितेन चेतसा न दृश्यते तच्च कृशोदरि त्वयि॥
अलभ्यशोकाभिभवेयमाकृतिर्विमानना सुभ्रु कुतः पितुर्गृहे।
पराभिमर्शो न तवास्ति कः करं प्रसारयेत्पन्नगरत्नसूचये॥
किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम्।
वद प्रदोषे स्फुटचन्द्रतारका विभावरी यद्यरुणाय कल्पते॥

अपर च—

दिव यदि प्रार्थयसे वृथा श्रमः पितुः प्रदेशास्तव देवभूमयः।
अथोपयन्तारमलं समाधिना न रत्नमन्विष्यति मृग्यते हि तत्॥

पार्वती—(परिपार्श्ववर्तिनीं सखीं पश्यति।)

सखी—(प्रणम्य।) हे साधो, तव कुतूहलं चेन्मम सख्यास्तप—
प्रवृत्तिकारणं श्रूयताम्।

इयं महेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य मानिनी।
अरूपहार्यं मदनस्य निग्रहात्पिनाकपाणिं पतिमाप्तुमिच्छति॥
असह्यहुंकारनिवर्तितः पुरा पुरारिमप्राप्तमुखः शिलीमुखः।
इमां हृदि व्यायतपातमक्षिणोद्विशीर्णमूर्तेरपि पुष्पधन्वनः॥

यदा तदेयधरस्याधिगमेऽन्यं विधिं विचिन्वती नापश्यत्तदेयं
पितुरनुज्ञया तपसे तपोवनमागतवती। अत्र हि—

द्रुमेषु सख्या कृतजन्मसु स्वयं फलं तपःसाक्षिषु दृष्टमेष्वपि।
न च प्ररोहाभिमुखोऽपि दृश्यते मनोरथोऽस्याः शशिमौलिसंश्रयः।

कर्तुं नोत्सहे। यतः—

अवस्तुनिर्बन्धपरे कथं नु ते करोऽयमामुक्तविवाहकौतुकः।
करेण शंभोर्वलयीकृताहिना सहिष्यते तत्प्रथमावलम्बनम्॥
त्वमेव तावत्परिचिन्तय स्वयं कदाचिदेते यदि योगमर्हतः।
वधूदुकूलं कलहंसलक्षणं गजाजिनं शोणितबिन्दुवर्षि च॥

इयं च तेऽन्या पुरतो विडम्बना यदूढया वारणराजहार्यया।
विलोक्य वृद्धोक्षमधिष्ठितं त्वया महाजनः स्मेरमुखो भविष्यति॥
द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया पिनाकिनः।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी॥
वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु।
वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने॥

अतो हे गौरि, अस्मादसदीप्सितान्मनो निवारय। अमंगलशीलो महादेवः क्व पुण्यलक्षणा त्वं च क्व। साधुजनेन श्मशानशूलस्य वैदिकी यूपसत्क्रिया नापेक्ष्यते।

पार्वती—(सक्रोधम्) हे ब्रह्मचारिन्, त्वमेनं हरं नूनं परमार्थतो न वेत्सि। यतो मामेवमात्थ। मन्दा अलोकसामान्यमचिन्त्यहेतुकं महात्मनश्चरितं द्विषन्ति। अपरं च—

विपत्प्रतीकारपरेण मंगलं निषेव्यते भूतिसमुत्सुकेन वा।
जगच्छरण्यस्य निराशिषः सतः किमेभिराशोपहतात्मवृत्तिभिः॥

अकिंचनः सन्प्रभवः स सम्पदां त्रिलोकनाथः पितृसद्मगोचरः।
स भीमरूपः शिव इत्युदीर्यते न सन्ति याथार्थ्यविदः पिनाकिनः॥

विभूषणोद्भासि पिनद्धभोगि वा गजाजिनालम्बि दुकूलधारि वा।
कपालि वा स्यादथ वेन्दुशेखरं न विश्वमूर्तेरवधार्यते वपुः॥

तदंगसंसर्गमवाप्य कल्पते ध्रुवं चिताभस्मरजो विशुद्धये।
तथा हि नृत्याभिनयक्रियाच्युतं विलिप्यते मौलिभिरम्बरौकसाम्‌
असम्पदस्तस्य वृषेण गच्छतः प्रभिन्नदिग्वारणवाहनो वृषा।
करोति पादावुपगम्य मौलिना विनिद्रमन्दाररजोरुणाङ्गुली ॥
विवक्षता दोषमपि च्युतात्मना त्वयैकमीशं प्रति साधु भाषितम्‌
यमामनन्त्यात्मभुवोऽपि कारणं कथं स लक्ष्यप्रभवो भविष्यति।

अथवा विवादेनालम्‌। त्वया तावद्यथा सः शिवः श्रुतस्तथा-विधोऽशेषमस्तु। मम मनस्तु तस्मिन्नीश्वरे भावैकरसं स्थितम्‌। काम वृत्तिर्वचनीयं नेक्षते। (सखीं प्रति) हे सखि, अयं बटुः पुनर्विवक्षुः। अतोऽहमन्यत्र गमिष्यामि। यतो न केवलं यो महतोऽपभाषते स पापभाग्भवति किन्तु तस्माद्यः शृणोति सोऽपि पापभाग्भवति।
(इति चलितुमिच्छति। जटिलस्य रूपं च त्यक्त्वा शंकर आत्मनो रूपं दर्शयति। तां च समालम्बते।)

शंकरः—हे पार्वति, अद्य प्रभृति तव तपोभिः क्रीतस्तव दासोऽहम्‌। अतो वरं वृणीष्व।

पार्वती—त्वयि महेश्वरे प्रसन्ने, सर्वं मे सिद्धम्‌। यथाप्यस्त्विदं भरतवचनम्‌।

पौरस्त्यानां प्रतीच्यां च सहकारः सदा भवेत्‌।
सुमार्गे प्रस्थितानां च बुद्धिर्भवतु सिद्धिदा ॥

इति तृतीयोऽङ्कः।

---

प्रथमोऽङ्कः

Notes:-पुरन्ध्री-स्त्री. An elderly woman. १. सिद्धि &c.-सिद्धैर्शस्तस्य रूपेण कृतो वरः श्रेष्ठो वेषो रूपं येन सः। नान्यन्ते-After

the benediction. नान्दी is the stanza or stanzas of benediction. सूत्रधार m. The manager. नेपथ्य n. The part of the stage behind the curtain; decoration; dress. आर्यपुत्र m. A title used by a woman in addressing her husband २. केवलात्मने-एकरूपाय। गुणत्रय-विभागाय-गुणानां सत्त्वादीनां त्रयमेव विभागो यस्य तस्मै। उपेयुषे-प्राप्तवते। विप्रकृताः-उपप्लुताः। दिवौकसः-देवाः। ३. आमनन्ति-कथयन्ति। उदासीनम्-कूटस्थम्। ४. हव्यम्-हविः। भोज्यम्-अभ्यवहार्यमन्नम्। वेद्यम्-साक्षात्कार्यम्। कुलिश m. n.-वज्र m. n. कुण्ठिताग्रीव-कुण्ठितकोटि इव। अलात n.-A fire-brand. प्रश्रमालोकनीयताम्-प्रश्रमनत्यन्तमालोकनीयतां दृश्यताम्। The word स्वागत n. (=welcome) is generally used with the dative of a person greeted. प्रत्येकम् प्रतिपुरुषम् विनियुक्तात्मा प्रवेशित-स्वरूपः-सर्वान्तर्यामीत्यर्थः। आमृष्टम्-आक्षिप्तम्। ५. भव &c.-भवतः स्वतो लब्धेन वरेणोदीर्ण उद्धतः। धूमकेतुः-'A comet', उत्पातविशेषः। उपप्लवाय-उपद्रवाय। ६. दूतहारितैः-दूतप्रापितैः। ७ संयमस्तिमितम्-समाधिनिश्चलम्। अयस्कान्त m-मणिविशेष m. 'Loadstone'.

द्वितीयोऽङ्कः—Notes—१. विशिखाः-बाणाः। इन्दीवराक्षीणाम्-कमलाक्षीणाम्। २. ज्ञानविशेष-ज्ञानसार। अनुग्रहः-प्रसादः ३. धैर्यच्युतिः-धैर्यहानिः। ४. कृच्छ्रम्-प्रतिबद्धप्रसरम्। ५. आमसनम्-मसृणम्। भूधरता-भूधरणशक्तिः। आर्द्रता-कर्दमता। प्रतिपक्षकल्पम्-अङ्गीकृतप्रायम्। ६. समभ्यर्थयितारः-याचितारः।

तृतीयोऽङ्कः—Notes—P.82. अजिनाषाढधरः-अजिनं कृष्णमृगत्वक्, आषाढः-पालाशदण्डः; तयोर्धरः। P.83 अद्रिपुत्री-अद्रिदिपु साध्वी। पादपतने-पादाचरणाय। प्रथमस्य वेधसः-हिरण्यगर्भस्य। प्रतिपत्तिः=प्रवृत्तिः। असम्भवशोकाभिभवा-incapable of the humiliation of grief.

विमानना-अवमान । पन्नगरत्नसूचये-फणिशिरोमणिशलाकां प्रहीतुम्। अपास्य विहाय। प्रदोषे-रजनीमुखे। विभावरी-रात्रिः। P 84. उपयन्तारम् वरम्। अधिश्रियः-अधिकैश्वर्यान्। पिनाकपाणि -पिनाकः पाणौ यस्य ■ -हर । पुरारिम् शङ्करम्। शिलीमुख -बाण । व्यायतपातम् अक्षिणोत्-व्यायत सुदूरावगाढ इति यावत्। तादृक् पात प्रहारो यस्मि न्कर्मणि तत्तथाक्षिणोत् struck her with a cruel blow विशीर्ण मूर्तेः -नष्टशरीरस्य। स्वय कृतचन्मसु स्वय रोपितेषु। शशिमौलिसंश्रय -चन्द्रशेखरविषय। प्ररोहाभिमुख -अङ्कुरोन्मुख। उच्चैः पदलङ्घनोत्सुका-उच्चै पदस्य उन्नतस्थानस्य लङ्घने आक्रमणे उत्सुका P 85 अवस्तुनिर्बन्धपरा अव स्तुनि तुच्छवस्तुनि निर्बन्धोऽभिनिवेश पर प्रधान यस्या सा। आमुक्तविवाह कौतुक-आमुक्तमासञ्जित विवाहे कौतुकं हस्तसूत्र यस्य स -One with the nuptial string tied round it अवलम्बनम्-ग्रहणम्। योग -सगति। कलहसलक्षणम्-कलहसचिह्नम्। विडम्बना-परिहास। ऊढया परिणीतया। अधिष्ठितम्-आरूढम्। स्मेरमुख -स्मितमुख। चन्द्रावत -चन्द्रस्य। व्यस्तम्-एकम्। भूतिसमुत्सुकेन-ऐश्वर्यकामेन। निराशिष -निरभिलाषस्य। आशो &c.-आशया तृष्णयोपहता दूषिता मत्प्रतिरन्त करणवृत्तिर्येषा तैः। पितृसद्मगोचर -श्मशानाश्रय। शिव -सौम्यरूप। उदीर्यते-उच्यते। विश्वमूर्ति -विश्व मूर्तिर्यस्य स -अष्टमूर्ति शिव। P 86 अभिनय अर्थव्यञ्जकचेष्टाविशेष.। च्युतम् पतितम्। प्रभिन्न &c -प्रभिन्नो मदस्रावी दिग्वारणो दिग्गजो वाहनं यस्य स। वृषा-देवेन्द्र। विनिद्राणां विकसितानां मन्दाराणां कल्पतरुकुसुमानां रजोभि परागैररुणा अङ्गुल्यो ययोस्तौ। आत्मभुव -ब्रह्मण। कामवृत्ति -स्वेच्छाव्यवहारी।

---

## पुत्रप्राप्ति।

शुद्धिमति सूर्यप्रभवे वंशे क्षीरनिधाविन्दुरिव राजेन्दुर्दिलीपो

जातः। स पुत्रप्राप्त्यर्थं वसिष्ठस्य धेनुं नन्दिनीमसेवत। सा धेनुर्हिंस्रैर्दुर्धर्षेति मत्वा, स एकदा वनेऽद्रिशोभायां दत्तदृष्टिरासीत्तदा स धनुर्धरो धेनोराक्रन्दितमशृणोत्। गवि तस्थिवांसं केसरिणं च ददर्श। ततः स नृपो वध्यस्य मृगेन्द्रस्य वधाय तूणीराच्छरमुद्धर्तुमैच्छत्। किन्तु तस्य दक्षिणकरः सायकस्य पुंख एव सक्तांगुलिः सन्नवतस्थे। तदानीं निगृहीतधेनुः सिंहस्तं दिलीपं मनुष्यवाचा निजगाद। हे नृप, मां कुम्भोदरं नाम शंकरस्य किंकरमवेहि। अतः—

अलं महीपाल तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात्।
न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्छति मारुतस्य॥
अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन।
यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः।
कण्डूयमानेन कटं कदाचिद्वन्यद्विपेनोन्मथिता त्वगस्य।
अथैनमद्रेस्तनया शुशोच सेनान्यमालीढमिवासुरास्त्रैः॥
तदाप्रभृत्येव वनद्विपानां त्रासार्थमस्मिन्नहमद्रिकुक्षौ।
व्यापारितः शूलभृता विधाय सिंहत्वमंकागतसत्ववृत्ति॥
तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण।
उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव॥
स त्वं निवर्तस्व विहाय लज्जां गुरोर्भवान्दर्शितशिष्यभक्तिः।
शस्त्रेण रक्ष्यं यदशक्यरक्षं न तद्यशः शस्त्रभृतां क्षिणोति॥

इति प्रगल्भं मृगाधिराजस्य वचः श्रुत्वा नृपः प्रत्यब्रवीत्।
मान्यः स मे स्थावरजंगमानां सर्गस्थितिप्रत्यवहारहेतुः।
गुरोरपीदं धनमाहिताग्नेर्नश्यत्पुरस्तादनुपेक्षणीयम्॥
स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्तयितुं प्रसीद।

दिनावसाने सुकयाल्पवत्सा विसृज्यतां धेनुरियं महर्षेः ॥

ततः सिंहो नृपं भूयो बभाषे ।

एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च ।
अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्वम् ॥
भूतानुकम्पा तव चेदियं गौरेका भवेत्स्वस्तिमती त्वदन्ते ।
जीवन्पुनः शश्वदुपप्लवेभ्यः प्रजाः प्रजानाथ पितेव पासि ॥
अथैकधेनोरपराधचण्डाद्गुरोः कृशानुप्रतिमाद्बिभेषि ।
शक्योऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोध्नीः ॥

तद् गामुपेक्ष्याऽऽत्मदेहं रक्ष ।

अथ नृपः प्रत्युवाच । भो सिंह, अहं क्षत्रियः । क्षतात्त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः । तस्य क्षत्रशब्दस्य विपरीतवृत्तेः पुंसो राज्येन किम् । अतो हे सिंह, मम यशःशरीरे दयालुर्भव । यतो मद्विधानामेकान्तविध्वंसिषु भौतिकेषु पिण्डेष्वनास्था ।

इत्येवं गामुक्तवते सिंहाय न्यस्तशस्त्रो दिलीपः स्वदेहं समर्पितवान् । तस्मिन्क्षणे उग्रं सिंहनिपातमुत्पश्यतोऽधोमुखस्य नृपस्योपरि आकाशात्पुष्पवृष्टिः पपात । हे वत्स, उत्तिष्ठेति वचो निशम्योत्थितः स राजा गां ददर्श । किन्तु सिंहं न ददर्श । ततो विस्मितं दिलीपं धेनुरुवाच । हे साधो, मया मायामुद्भाव्य त्वं परीक्षितोऽसि । ऋषिप्रभावान्मय्यन्तकोऽपि प्रहर्तुं न प्रभुः, किमुतान्यहिंस्राः । अपरं च ।

भक्त्या गुरौ मय्यनुकम्पया च प्रीताऽस्मि ते पुत्र वरं वृणीष्व ।
न केवलानां पयसां प्रसूतिमवेहि मां कामदुघां प्रसन्नाम् ॥

ततः स राजा हस्तौ समानीय, स्वपत्न्यां सुदक्षिणायां वंशस्य कर्तारं तनयं ययाचे। धेनुनापि भवतु तवानन्तकीर्तिः पुत्र इति वरस्तस्मै दत्तः। (रघुवंशे द्वितीयः सर्गः।)

---

Notes-P.89 हिंस्रैः-हिंस्रकैः by savage animals व्याघ्रादिभिः। आक्रन्दितम्-आर्तघोषणम्। तूणीरात्-निषंगात् or इषुधेः from the quiver भाथाभाथी. पुंख m. n The feathered part of an arrow. निगृहीत-पीडित। न पादपोन्मूलनशक्ति &c.-पादपोन्मूलने शक्तिर्यस्य तादृशोऽपि मारुतस्य रंहो वेगः शिलोच्चये पर्वते न मूर्छति न प्रसरति। आलीढम्-ग्रस्तम्। पारण n.-व्रतान्तभोजनम्। शरीरवृत्तिम्-जीवनम्। निर्वर्तयितुम्-सम्पादयितुम्। P.90 भवेदस्मिन्मती &c.-तव नाशे जीवेत्। भूतानुकम्पा &c. -स्वप्राणव्ययेनैकधेनुरक्षणात् वरं जीवितेनैव शश्वदखिलजगत्त्राणमिच्छयः। कृच्छ्रानुप्रतिमात्-अनिवार्यात्। एकान्तोऽस्य &c. -अस्य गुरोर्मन्युः क्रोधः यदा इयोपास्ति यासां त्वा पयोध्नीः कोटिशो गाः स्पर्शयता अनिपादयता भवता विनेतुमपनेतुं शक्य। उदग्रः-उन्नतः। सहस्य-धनवर्तस्य। एकान्तविध्वंसिषु-अवश्यविनाशिषु। अनास्था-अनपेक्षा। गामुत्पश्यते-वाणीमुत्पादते। हस्तौ समानीय-अंजलिं बद्ध्वा।

---

## तुरगहरणम्।

नृपो दिलीप एकोनशतमश्वमेधांश्चकार। ततः शततममश्वमेधं कर्तुं शतमुत्तेरनुद्गतमात्मनः पुत्रं रघुं होमतुरंगरक्षणे नियुज्य, तम् नगरमध्ये स उत्सृष्टवान्। किन्तु तं तुरगं धनुर्भृतां रक्षिणामग्र एव गूढविग्रहः शक्रो जहार।

अथ नन्दिनीप्रभावाद् दिलीपनन्दनोऽतीन्द्रियेष्वप्युपपन्नदर्शनो बभूव। पूर्वस्यां दिशि च सोऽश्वं हरन्तमिन्द्रं दृष्ट्वा, गगनस्पृशा धीरेण स्वरेण रघुरेनमुवाच।

मखांशभाजां प्रथमो मनीषिभिस्त्वमेव देवेन्द्र सदा निगद्यसे।
अजस्रदीक्षाप्रयतस्य मद्गुरोः क्रियाविघाताय कथं प्रवर्तसे ॥
त्रिलोकनाथेन सदा मखद्विषस्त्वया नियम्या ननु दिव्यचक्षुषा।
स चेत्स्वयं कर्मसु धर्मचारिणां त्वमन्तरायो भवसि च्युतो विधिः
तदङ्गमग्र्यं मघवन्महाक्रतोरमुं तुरंगं प्रतिमोक्तुमर्हसि।
पथः श्रुतेर्दर्शयितार ईश्वरा मलीमसामाददते न पद्धतिम् ॥

इति रघुणा समीरितं प्रगल्भं वचो निशम्य, सविस्मयो देवेन्द्रो रथं निवर्तयामास। उत्तरं च प्रतिवक्तुं प्रचक्रमे।

यदात्थ राजन्यकुमार तत्तथा यशस्तु रक्ष्यं परतो यशोधनैः।
जगत्प्रकाशं तदशेषमिज्यया भवद्गुरुर्लङ्घयितुं ममोद्यतः ॥
हरिर्यथैकः पुरुषोत्तमः स्मृतो महेश्वरस्त्र्यम्बक एव नापरः
तथा विदुर्मां मुनयः शतक्रतुं द्वितीयगामी नहि शब्द एष नः ॥
अतोऽयमश्वः कपिलानुकारिणा पितुस्त्वदीयस्य मयापहारितः
अलं प्रयत्नेन तवात्र मा निधाः पदं पदव्यां सगरस्य संततेः ॥

तदुक्त्वाऽभयो रघुः प्रहस्य पुनर्बभाषे। हे देवेन्द्र, यद्येष मे सांमर्दि शस्त्रं गृहाण। भवान्मां रघुमनिर्जित्य, कृती न। स रघुस्तदानीमुन्मुखः सन् मघवन्तमेवमुक्त्वा, शरासनं सशरं करिष्यमाण आलीढस्थेन स्थानभेदेन शिवोपशोभिना वपुषाऽकर्णमातिष्ठत्। रघोः पत्रिणा हृदि क्षतो गोत्रभिदपि दिव्ये धनुष्यमोघं सायकं समधत्त। ततो भीमासुरशोणितोचितः स इन्द्रमुक्तः सायके

मुनियनतरुच्छाया देव्या तया सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥
(रघुवशे तृतीय सर्ग ।)

Notes-P 91 अनर्गलम्–अप्रतिबन्धम्, अव्याहतस्वैरगतिम्। P 92 उपपमदर्शन –सपन्नसाक्षात्कारशक्ति। इन्द्र वृत्रहन् देवेन्द्र–हरि गोत्रभिद्–मघवन् शतक्रतु बिडौजस मातलिसारथि शक्र m the Lord of gods विधि –अनुष्ठानम्। च्युत –क्षत। मलीमसां मलिनां पद्धतिं मार्गं नाद्रियन्त न स्वीकुर्वते। राजन्यकुमार–क्षत्रियकुमार। परत –शत्रुत। इच्छया–यागेन। हरि –विष्णु। आलीढ n A particular attitude in shooting. P 93 सोपानानां परम्परां पङ्क्तिमिव। विषयेभ्यो व्यावृत्त मा निवृत्तचित्त। नृपतिककुदम्–राजचिह्नम्। सितातपवारणम्–श्वेतच्छत्रम्। P 94 गलितवयसाम्–वृद्धानाम्।

## सीतात्यागः ।

एकदा विशुद्धवृत्तो रामभद्रो भद्रनामकमपसर्पं स्ववृत्तमुद्दिश्य किंवदन्तीं पप्रच्छ। निर्बन्धेन च पृष्ट स चरो जगाद। हे मानवदेव, रक्षोभवन उषिताया देव्या सीताया परिग्रह वर्जयित्वा त्वदीय सर्वं चरित पौरा स्तुवन्ति। तच्छ्रुत्वा कलत्रनिन्दागुरुणा कीर्तिविपर्ययेण रामस्य हृदय विदीर्णम्। किमात्मनिर्वादकथामुपेक्षे, जायामदोषामुत संत्यजामीति स एकपक्षाश्रयविक्लवत्वात्कंचित्कालं दोलाचलचित्तवृत्तिरासीत्। अन्तेऽपि स्वदेहात्किमुतेन्द्रियार्थाद्यशोधनानां हि यशो गरीय इति निश्चित्य, पत्न्यास्त्यागेन वाच्य परिमार्ष्टुमैच्छत्। तत स रामोऽवरजान्संनिपात्य, आत्माश्रय कौलीन तेभ्य आचचक्षे। उवाच च।

राजर्षिवंशस्य रविप्रसूतेरुपस्थितः पश्यत कीदृशोऽयम् ।
मत्तः सदाचारशुचेः कलंकः पयोदवातादिव दर्पणस्य ॥
पौरेषु सोऽहं बहुलीभवन्तमपां तरंगेष्विव तैलबिन्दुम् ।
सोढुं न तत्पूर्वमवर्णमीशे आलानिकं स्थाणुमिव द्विपेन्द्रः ।
तस्यापनोदाय फलप्रवृत्तावुपस्थितायामपि निर्व्यपेक्षः ।
त्यक्ष्यामि वैदेहसुतां पुरस्तात्समुद्रनेमिं पितुराज्ञयेव ॥
अवैमि चैनामनघेति किन्तु लोकापवादो बलवान्मतो मे ।
छाया हि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः
रक्षोवधान्तो न च मे प्रयासो व्यर्थः स वैरप्रतिमोचनाय ।
अमर्षणः शोणितकांक्षया किं पदा स्पृशन्तं दशति द्विजिह्वः ॥
तदेष सर्गः करुणार्द्रचित्तैर्न मे भवद्भिः प्रतिषेधनीयः ।
यद्यर्थिता निर्हृतवाच्यशल्यान्प्राणान्मया धारयितुं चिरं वः ॥

इत्युक्तवन्तं रामं तेषु भ्रातृषु कश्चन निषेद्धुमनुमोदितुं वा शक्तो नासीत् । ततः स लक्ष्मणमवदत् । हे सौम्य, तव भ्रातृजायां सीतां वाल्मीकिपदं प्रापय्य तत्रैनां त्यजेति । गुरूणामाज्ञा ह्यविचारणीयेति मत्वा, गुरोर्नियोगात्सुमित्रातनयोऽपि तां साध्वीं वनितां सीतां वनान्ते त्यक्त्वा, कथंचिद् व्यवस्थापितवाग् महीपतेः शासनं तस्यै श्रावयामास । तच्छ्रुत्वा सा सीता भूमौ पपात कंचित्कालं च लुप्तसंज्ञा बभूव । यदा सा संज्ञां प्राप तदा लक्ष्मणस्तां समाश्वास्य, उवाच । हे देवि, निघ्नस्य मम भर्तृनिदेशरौक्ष्यं क्षमस्वेत्युक्त्वा नम्रो बभूव । ततः सीता तं लक्ष्मणमुत्थाप्य वाक्यं जगाद । हे सौम्य, प्रीतास्मि ते । चिराय जीव । बिडौजसा विष्णुरिवाग्रजेन भ्रात्रा त्वमित्थं परवानसि । अपि च—

मुनिवनतरुच्छायां देव्या तया सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥
(रघुवंशे तृतीय सर्ग. 1)

Notes–P 91 अनर्गलम्–अप्रतिबन्धम्, अव्याहतवैरगतिम् । P 92 उपपन्नदर्शन –सपन्नसाक्षात्कारशक्ति । इन्द्र–वृत्रहन्–देवेन्द्र–हरि–गोत्रभिद्–मघवन्–शतक्रतु बिडौजस्–मातलिसारथि शक्र m the Lord of gods विधि –अनुष्ठानम् । च्युत –क्षत । मलीमसां मलिना पद्धतिं मार्गं नाद्रवृत न स्वीकुर्वते । राजन्यकुमार–क्षत्रियकुमार । परत –शत्रुत । इच्छया–यागेन । हरि –विष्णु । आलीढ n A particular attitude in shooting. P 93 सोपानानां परम्परां पङ्क्तिमिव । विषयेभ्यो व्यावृत्तात्मा निवृत्तचित्त । नृपतिककुदम्–राजचिह्नम् । सितातपवारणम्–श्वेतच्छत्रम् । P 94 गलितवयसाम्–वृद्धानाम् ।

## सीतात्यागः ।

एकदा विशुद्धवृत्तो रामभद्रो भद्रनामकमपसर्पं स्ववृत्तमुद्दिश्य किंवदन्तीं पप्रच्छ । निर्बन्धेन च पृष्ट स चरो जगाद । हे मानवदेव, रक्षोभवन उषिताया देव्या सीताया परिग्रह वर्जयित्वा त्वदीय सर्वं चरित पौरा. स्तुवन्ति । तच्छ्रुत्वा कलत्रनिन्दागुरुणा कीर्ति विपर्ययेण रामस्य हृदय विदीर्णम् । किमात्मनिर्वादकथामुपेक्षे, जायामदोषामुत संत्यजामीति स एकपक्षाश्रयविक्लवत्वात्कंचित्कालं दोलाचलचित्तवृत्तिरासीत् । अन्तेऽपि स्वदेहात्किमुतेन्द्रियार्थाद्यशो धनानां हि यशो गरीय इति निश्चित्य, पत्न्यास्त्यागेन वाच्यं परि मार्ष्टुमैच्छत् । तत स रामोऽवरजान्सन्निपात्य, आत्माश्रय कौलीन तेभ्य आचचक्षे । उवाच च ।

राजर्षिवंशस्य रविप्रसूतेरुपस्थितः पश्यत कीदृशोऽयम्।
मत्तः सदाचारशुचेः कलंकः पयोदवातादिव दर्पणस्य ॥
पौरेषु सोऽहं बहुलीभवन्तमपां तरंगेष्विव तैलबिन्दुम् ।
सोढुं न तत्पूर्वमवर्णमीशे आलानिकं स्थाणुमिव द्विपेन्द्रः।
तस्यापनोदाय फलप्रवृत्तावुपस्थितायामपि निर्व्यपेक्षः।
त्यक्ष्यामि वैदेहसुतां पुरस्तात्समुद्रनेमिं पितुराज्ञयेव ॥
अवैमि चैनामनघेति किन्तु लोकापवादो बलवान्मतो मे ।
छाया हि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः
रक्षोवधान्तो न च मे प्रयासो व्यर्थः स वैरप्रतिमोचनाय।
अमर्षणः शोणितकांक्षया किं पदा स्पृशन्तं दशति द्विजिह्वः॥
तदेष सर्गः करुणार्द्रचित्तैर्न मे भवद्भिः प्रतिषेधनीयः।
यद्यर्थिता निर्हृतवाच्यशल्यान्प्राणान्मया धारयितुं चिरं वः॥

इत्युक्तवन्तं रामं तेषु भ्रातृषु कश्चन निषेद्धुमनुमोदितुं वा शक्तो नासीत्। ततः स लक्ष्मणमवदत्। हे सौम्य, तव भ्रातृजायां सीतां वाल्मीकिपदं प्रापय्य तत्रैनां त्यजेति। गुरूणामाज्ञा ह्यविचारणीयेति मत्वा, गुरोर्नियोगात्सुमित्रातनयोऽपि तां साध्वीं वनितां सीतां वनान्ते त्यक्त्वा, कथंचिद् व्यक्तस्वापिनवाग् महीपतेः शासनं तस्यै कथयामास। तच्छ्रुत्वा सा सीता भूमौ पपात कंचित्कालं च लुप्तसंज्ञा बभूव। यदा सा संज्ञां प्राप तदा लक्ष्मणस्तां सतीमाश्वास्य, बभाषे। हे देवि, निदेशस्य मम भर्तृनिदेशरौक्ष्यं क्षमस्वेत्युक्त्वा नम्रो बभूव। ततः सीता तं लक्ष्मणमुत्थाप्य वाक्यं जगाद। हे सौम्य, प्रीतास्मि ते। चिराय जीव। विडौजसा विष्णुरिवाग्रजेन भ्रात्रा त्वमित्थं परवानसि। अपि च—

श्वश्रूजनं सर्वमनुक्रमेण विज्ञापय प्रापितमत्प्रणामः।
प्रजानिषेकं मयि वर्तमानं सूनोरनुध्यायत चेतसेति ॥
वाच्यस्त्वया मद्वचनात्स राजा वह्नौ विशुद्धामपि यत्समक्षम्।
मां लोकवादश्रवणादहासीः श्रुतस्य किं तत्सदृशं कुलस्य ॥
कल्याणबुद्धेरथवा तवायं न कामचारो मयि शङ्कनीयः ।
ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः ॥
उपस्थितां पूर्वमपास्य लक्ष्मीं वनं मया सार्धमसि प्रपन्नः।
तदास्पदं प्राप्य तयातिरोषात्सोढास्मि न त्वद्भवने वसन्ती॥
निशाचरोपप्लुतभर्तृकाणां तपस्विनीनां भवतः प्रसादात्।
भूत्वा शरण्या शरणार्थमन्यं कथं प्रपत्स्ये त्वयि दीप्यमाने।
किंवा तवात्यन्तवियोगमोघे कुर्यामुपेक्षां हतजीवितेऽस्मिन्।
स्याद्रक्षणीयं यदि मे न तेजस्त्वदीयमन्तर्गतमन्तरायः ॥
साहं तपः सूर्यनिविष्टदृष्टिरूर्ध्वं प्रसूतेश्चरितुं यतिष्ये ।
भूयो यथा मे जननान्तरेऽपि त्वमेव भर्ता न च विप्रयोगः ॥
नृपस्य वर्णाश्रमपालनं यत्स एव धर्मो मनुना प्रणीतः ।
निर्वासिताप्येवमतस्त्वयाहं तपस्विसामान्यमवेक्षणीया ॥

तथेति तस्याः सीतायाः वाचं प्रतिगृह्य, लक्ष्मणे दृष्टिपथं व्यतीते, सा सीता व्यसनातिभारान्मुक्तकण्ठं चक्रन्द। ततो रुदितानुसारी कविर्वाल्मीकिस्तामभ्यगच्छत्। वन्दमानां सीतां चावदत्।

जाने विसृष्टां प्रणिधानतस्त्वां मिथ्यापवादक्षुभितेन भर्त्रा।
तन्मा व्यथिष्ठा विषयान्तरस्थं प्राप्तासि वैदेहि पितुर्निकेतम् ॥
उत्खातलोकत्रयकण्टकेऽपि सत्यप्रतिज्ञेऽप्यविकत्थनेऽपि।
त्वां प्रत्यकस्मात्कलुषप्रवृत्तावस्त्येव मन्युर्भरताग्रजे मे ॥
तवोरुकीर्तिः श्वशुरः सखा मे सतां भवोच्छेदकरः पिता ते।

धुरि स्थिता त्वं पतिदेवतानां किं तन्न येनासि ममानुकम्प्या ॥
तपस्विसंसर्गविनीतसत्त्वे तपोवने वीतभया वसास्मिन् ।
इतो भविष्यत्यनघप्रसूतेरपत्यसंस्कारमयो विधिस्ते ॥
अशून्यतीरां मुनिसंनिवेशैस्तमोपहन्त्रीं तमसां वगाह्य ।
तत्सैकतोत्सङ्गबलिक्रियाभिः संपत्स्यते ते मनसः प्रसादः ॥
पुष्पं फलं चार्तवमाहरन्त्यो बीजं च बालेयमकृष्टरोहि ।
विनोदयिष्यन्ति नवाभिषङ्गामुदारवाचो मुनिकन्यकास्त्वाम् ॥
पयोघटैराश्रमबालवृक्षान्संवर्धयन्ती स्वबलानुरूपैः ।
असंशयं प्राक्तनयोपपत्तेः स्तनंधयप्रीतिमवाप्स्यसि त्वम् ॥

पश्चाद् दयार्द्रचेता वाल्मीकिस्तामादाय, स्वमाश्रमं निनाय तदागमप्रीतिषु तापसीषु चार्पयामास ।

सीतां हित्वा दशमुखरिपुर्नोपयेमे यदन्यां
तस्या एव प्रतिकृतिसखो यत्क्रतूनाजहार ।
वृत्तान्तेन श्रवणविषयप्रापिणा तेन भर्तुः
सा दुर्वारं कथमपि परित्यागदुःखं विषेहे ॥

(रघुवंशे चतुर्दशः सर्गः ।)

---

Notes—P.94. अपसर्पः-चरः-A spy. किंवदन्ती-जनश्रुतिः-जनवादः। परिग्रह m.-स्वीकार m.। कीर्तिविपर्ययेण-अपकीर्त्या। दोलाचलचित्तवृत्तिः-दोला इव चला चित्तवृत्तिः यस्य सः। वाच्यम्-अपवादम्। कौलीनम्-निन्दाम्। P.95. मत्तः-मत्सकाशात्। पयोद &c-दर्पणस्य पयोदवातादिव। श्वासः वर्णादित्यर्थः। बहुलीभवन्तम्-प्रसरन्तम्। तत्पूर्वम्-स एव पूर्वो यस्य स तम्। अवर्णम्-अपवादम्। आलानिकम्-आलानं बन्धनप्रयोजनमस्येति। स्थाणु m.-स्तम्भ m.। अपनोद m.-अपनुति f. removing.। फलप्रसूतौ-अपत्योत्पत्तौ। निर्देशः-निग्रहः। सद्र-

नेमिं भूमिम् । वैरप्रतिमोचनाय-वैरशोधनाय । अमर्षण असहन । सर्ग -
निश्चय । अर्थिता इच्छा । निघ्नस्य पराधीनस्य । रौक्ष्यम्-पारुष्यम् । P 96
प्रजानिषेकम्-गर्भम् । चेतसानुध्यायत-शिवमस्त्विति चिन्तयत । श्रुतस्य-
प्रत्यायनस्य । कामचार -इच्छया चरणम् । विरूढेषु -अदानिनिर्घोष । तन्-
तस्मात् । आस्पदम्-प्रतिष्ठाम् । उपप्लुता -पीडिता । धारण्या धारणसमर्था ।
रक्षणीयम्-रक्षणार्हम् । अन्तर्गतम्-कुक्षिस्थम् । अन्तराय -विघ्नः । निर्वासिता-
निष्कासिता । प्रणिधानत -समाधिदृष्ट्या । निकेतम् गृहम् । अविकत्थने-अना
त्मश्लाघिनि । फल्गुप्रवृत्तौ गर्हितव्यापारे । P 97 पतिदेवतानाम्-पतिव्रतानाम् ।
अनुकम्प्या-अनुग्राह्या । विनीतसत्त्वे शान्तजन्तुके । अनघप्रसूते -सुखप्रसूते ।
अपत्यसंस्कारमय -जातकर्मादिरूप । सन्निवेशा -उटजाः । सगाढ-स्नात्वा ।
आर्तवम्-स्वकालप्राप्तम् । कल्ये हितं काल्यं पूजायोग्यम् । नवाभिषंगाम्-
नूतनदु खाम् । स्वरूपानुरूपे स्वभावत्यनुसारिभि ।

---

Here I have tried to epitomise the story of कादम्बरी, composed by बाणभट्ट, in the words of the author himself It is well known that to go through the whole book is a difficult task On account of big compounds the original book has words which are as big as sentences, sentences as big as paragraphs and paragraphs as big as booklets Naturally not only ordinary Sanskrit students but even persons taking keen interest in Sanskrit literature find it difficult to go through the story in its original form. To make their task easy and to know the whole story at a glance the following summary is given

## कादम्बरीकथासारः ।

आसीत्पाकशासन इवापरो राजा शूद्रको नाम। तस्य च राज्ञो वेत्रवत्या सरिता परिगता विदिशाभिधाना नगरी राजधान्यासीत्। एकदा राजानमास्थानमण्डपगतं प्रतिहारी समुपसृत्य सविनयमब्रवीत्। देव, द्वारस्थिता कापि चाण्डालकन्यका पञ्जरस्थं शुकमादाय देवं विज्ञापयति। इच्छामि देवदर्शनसुखमनुभवितुमिति। एतदाकर्ण्य देवः प्रमाणम्। इत्युक्त्वा विरराम। उपजातकुतूहलस्तु राजा समीपवर्तिनां राज्ञामालोक्य मुखानि को दोषः प्रवेशयतामित्यादिदेश।

अथ प्रतिहारी नरपतिवचनानन्तरमुत्थाय वयःपरिणामपाण्डुरशिरसा पुरुषेणाधिष्ठितपुरोभागां तां मातंगकुमारीं प्रावेशयत्। प्रविश्य च सा कन्यका राजानमद्राक्षीत्, प्रगल्भवनितेव च तं प्रणनाम। कृतप्रणामायां च तस्यां स पुरुषस्तं विहंगमादाय पञ्जरगतमेव किञ्चिदुपसृत्य राज्ञे न्यवेदयदब्रवीच्च। देव, विदितसकलशास्त्रार्थोऽयं वैशम्पायनो नाम शुकः। एनमादायास्मत्स्वामिदुहिता देवपादमूलमागता। तदयमात्मीयः क्रियताम्। इत्येवमुच्चारयन्नेव तस्मिन्मध्याह्नशंखध्वनिरुदतिष्ठत्। तमाकर्ण्य क्षितिपतिरास्थानमण्डपादुत्तस्थौ। अथ विसर्जितराजलोको विश्राम्यतामिति स्वयमेवाभिधाय तां चाण्डालकन्यकां वैशम्पायनः प्रवेश्यतामभ्यन्तरमिति ताम्बूलकरंकवाहिनीमादिश्य नरपतिरभ्यन्तरं प्राविशत्।

क्रमेण च निर्वर्तिताह्निको देवगृहमगमत्। उपगतेनाथ

पतिपूजनश्च निष्क्रम्य देवगृहान्निवर्तिताग्निकार्यं समुचितभोजनै सह भूपतिभिराहारमवनिपो निर्वर्तयामास। तत आस्थानमण्डपं गत्वा, नातिदूरवर्तिनीमन्त पुराद्वैशम्पायनमादायागच्छेति प्रतिहारीमादिदेश। सा च यथाज्ञापयति देव इति शिरसि धृत्वाज्ञा यथादिष्टम करोत्। अथ मुहूर्तादिव वैशम्पायन प्रतिहार्या गृहीतपञ्जरो राजान्तिकमाजगाम। ततो नरपतिरब्रवीत्। आवेदयतु भवानादित प्रभृति कार्त्स्न्येनात्मनो जन्म। वैशम्पायन सादरमब्रवीत्। देव, महतीय कथा। यदि कौतुकमाकर्ण्यताम्।

अस्ति विन्ध्याटवी नाम। तत्र शाखाबाहुभिरपगुह्येव विन्ध्याटवीमवस्थितो महाञ्जीर्ण शाल्मलीवृक्ष। तत्र च शाखाग्रेषु कोटरोदरेषु च शुकशकुनिकुलानि प्रतिवसन्ति स्म। एकस्मिञ्जीर्णे कोटरे निवसत पितुरहमेवैक सूनुरभवम्। अतिप्रबलया चाभिभूता ममैव जायमानस्य प्रसववेदनया जननी मे लोकान्तरमगमत्। ततो दु खितोऽपि तात सुतस्नेहात्फलशकलानि समाहृत्य मह्यमदात्। प्रतिदिवसमात्मना च मदुपभुक्तशेषमकरोदशनम्।

एकदा तु तस्मिन्महावने संत्रासितसकलवनचरो मृगयाकोलाहल ध्वनिरुदचरत्। आकर्ण्य च तमहं भयविह्वल समीपवर्तिन पितु र्जराशिथिलपक्षपुटान्तरमविशम्। अचिराच्च प्रशान्ते तस्मिन्मृगया कलकले मन्दीभूतभयोऽहमुपजातकुतूहल शबरसैन्यमद्राक्षम्। मध्ये च तस्यातिमहत शबरसैन्यस्य शबरसेनापतिमपश्यम्। आपीत सलिल सेनापति परिपीताम्भसा सकलेन तेन शबरसैन्येनानुगम्य

मानः शनैः शनैरभिमतं दिगन्तरमयासीत्।

एकतमस्तु जरच्छबरः पिशितार्थी तस्मिन्नेव तरुतले मुहूर्तमिव व्यलम्बत। सोऽथ तेनैव पादपमारुह्य, शाखान्तरेभ्यः कोटरेभ्यश्च शुकशावकानग्रहीत्। अपगतासूंश्च कृत्वा क्षितावपातयत्। तातस्तु तमाकस्मिकं पक्षपुटेनाच्छाद्य मां तस्थौ। असावपि पापः कोटरद्वारमागत्य, तातमाकृष्यापगतासुमकरोत्। मां तु पक्षसंपुटान्तरगतं नालक्षयत्। उपरतं च तमवनितलेऽधोमुखममुञ्चत्। अहमपि तच्चरणान्तराले प्रवेशितशिरोधरस्तेनैव सहापतम्। अवशिष्टपुण्यतया तु शुष्कपत्रराशेरुपरि पतितमात्मानमपश्यम्। अंगानि मे नाशीर्यन्त। यावच्चासौ तस्मात्तरुशिखरान्नावतरति तावदहं पितरमुपरतमुत्सृज्य नृशंस इव नातिदूरवर्तिनस्तमालविटपिनो मूलदेशमविशम्।

अवतीर्य स तेन समयेन क्षितितलविप्रकीर्णान्संहृत्य तान्शुकशिशूनतित्वरितगमनः सेनापतिगतेनैव वर्त्मना तामेव दिशमगच्छत्। मां तु उत्पन्नजीविताशं बलवती पिपासा परवशमकरोत्। तस्माच्च तमालतरुमूलात्सलिलसमीपमुपसर्तुं प्रयत्नमकरवम्। अजातपक्षतया च नातिस्थिरचरणसंचारस्य मुहुर्मुहुर्मुखेन पततो मम समभून्मनसि। अद्यापि दूर एव सरस्तीरम्। सीदति मे हृदयम्। अपि नाम खलो विधिरनिच्छतोऽपि मे मरणमद्योपपादयेत्।

इत्येवं चिन्तयत्येव मयि तस्मात्सरसो नातिदूरवर्तिनि तपोवने जाबालिर्नाम महातपा मुनिः प्रतिवसति स्म। तत्तनयश्च हारीतनामा सवयोभिरपरैस्तपोधनकुमारैरनुगम्यमानस्तदेव पद्मसरः स्नातु

मुरुपागमत्। स मामालोक्य समीपवर्तिनमृषिकुमारकमन्यतममब्रवीत्। अयं कथमपि शुकशिशुरसंजातपक्षपुट एव तरुशिखरादस्मात्परिच्युतः। श्येनमुखपरिभ्रष्टेन वानेन भवितव्यम्। तदेहि याव-देवायमसुभिर्न वियुज्यते तावदेव गृहाणेममवतारय सलिलसमीपम्। इत्यभिधाय तेन मां सरस्तीरमनाययत्। उपसृत्य च स्वयं मां मुक्तप्रयत्नमंगुल्या कतिचित्सलिलबिन्दूनपाययत्। नलिनीपलाशस्य च छायायां मां निधायाकरोत्स्नानविधिम्। अभिषेकावसाने मुनि-कुमारककदम्बकेनानुगम्यमानो मां गृहीत्वा तपोवनाभिमुखम-गच्छत्। अनतिदूरं च गत्वातिरमणीयमाश्रमं तत्र च भगवन्तं जाबालिमपश्यम्।

अवलोक्य चाहमचिन्तयम्। धन्यमिदमाश्रमपदमयमधिपतिर्यत्र। एवं चिन्तयन्तमेव मामशोकतरोरधश्छायायां स्थापयित्वा हारीतः कृताभिवादन पितुरनतिसमीपवर्तिनि कुशासने समुपाविशत्। आलोक्य तु मा ते सर्व एव मुनयः कुतोऽयमासादितः शुकशिशु-रितितमासीनमपृच्छन्। असौ तु तानब्रवीत्। अयं मया स्नातुमितो गतेनोत्तप्तपांसुपटलमध्यगत आसादितः। इत्येवमस्मत्सम्बद्धमाला-पमाकर्ण्य, भगवाञ्जाबालिर्मामवलोक्याब्रवीत्।

अस्त्यवन्तीपूज्जयिनी नाम नगरी। तस्यां परिहृतप्रतापीडो राजा तारापीडो नामाभूत्। तस्य च राज्ञोऽमात्यो ब्राह्मणः शुक नासो नामासीत्। अथ तस्य महिषी विलासवती नाम। गच्छति काले विलासवती सुतमसूत। शुकनासस्यापि ज्येष्ठायां ब्राह्मण्यां

मनोरमाभिधानायां तनयो जातः। तस्य वैशम्पायनो नामासीत्। राजा स्वसूनोश्चन्द्रापीड इति नाम चकार। चन्द्रापीडस्य वैशम्पायनः परं मित्रमासीत्। एकदाधीताशेषविद्यश्चन्द्रापीडोऽनुगम्यमानं कन्यकया कैलासनामानं कञ्चुकिनमपश्यत्। स कृतप्रणामो विज्ञापयामास। कुमार, महादेवी विलासवती समाज्ञापयति। इयं खलु कन्यका पत्रलेखाभिधाना। बलवानस्यां मे पक्षपातः। अतः सर्वथा तथा कल्याणिना प्रयतितव्यं यथेयमतिचिरमुचिता परिचारिका ते भवति। इत्यभिधाय विरतवचसि कैलासे यथाज्ञापयत्यम्बेत्येवमुक्त्वा चन्द्रापीडः कञ्चुकिनं प्रेषयामास।

एवं समतिक्रामत्सु केषुचिद् दिवसेषु राजा चन्द्रापीडस्य यौवराज्याभिषेकं चिकीर्षुर्मन्त्रपूतेन वारिणा सुतमभिषिषेच। अनन्तरं चन्द्रापीडः सिंहासनमारुरोह। आरूढस्य दिग्विजयप्रयाणशंसी प्रस्थानदुन्दुभिरामन्द्रं दध्वान। ततः क्रमेणावर्जितसकलभुवनतलः प्रदक्षिणीकृत्य वसुधां, किरातानां सुवर्णपुरं नाम निवासस्थानं जित्वा जग्राह। तत्र च निजबलस्य विश्रामहेतोः कतिपयान्दिवसानतिष्ठत्।

एकदा तु तत्रस्य एवेन्द्रायुधनामानमश्वमारुह्य मृगयानिर्गतो यदृच्छया किन्नरमिथुनमद्राक्षीत्। अपूर्वदर्शनतया कृतग्रहणाभिलाषः सनुपसर्पश्च तत्पलायमानमिन्द्रायुधेनैकाकी निर्गत्य निजबलमपहाय दूरमनुससार। तच्चानुबध्यमानं किन्नरमिथुनमालोकयत एवास्य संमुखापतितमचलतुङ्गशिखरमारुरोह। आरूढे च तस्मिन्दर्शने

शनैस्तदनुसारिणीं निवर्त्य दृष्टिमुपजातजलाशयशंकस्तरुखण्डं ददर्श तच्च प्रविवेश। प्रविश्य च तस्य तरुखण्डस्य मध्यभागेऽच्छोदं नाम सरो दृष्टवान्। तस्य च दक्षिणं तीरमासाद्य तुरगादवततार। अवतीर्य चेन्द्रायुधं सरोवतार्य पीतसलिलं चोत्थाप्य हस्तपाशशृंखलया चरणौ बद्ध्वा, क्षिप्त्वा चाग्रतः कतिचिद्दूर्वाप्रवालकवलान्पुनरपि सलिलमवततार। ततश्च कृत्वा जलमयमाहारं सरःसलिलादुदगात्। कमलिनीपलाशैश्च लतामण्डपपरिक्षिप्ते शिलातले स्रस्तरमास्तीर्य निधाय शिरसि पिण्डीकृतमुत्तरीयं निषसाद। मुहूर्तं विश्रान्तश्च गीतशब्दं शुश्राव। गीतध्वनिप्रभवजिज्ञासया कृतगमनबुद्धिः क्रमेण भगवतः शूलपाणेः शून्यं सिद्धायतनमपश्यत्।

कौतुकम्। इत्येवमभिहिता सा शनैः प्रत्यवादीत्। राजपुत्र, किमनेन मम मन्दभाग्याया वैराग्यवृत्तान्तेन श्रुतेन। तथापि यदि कुतूहलं श्रूयताम्।

दक्षस्य प्रजापतेरतिप्रभूतानां कन्यकानां मध्ये द्वे सुते मुनिररिष्टा च बभूवतुस्ताभ्यां गन्धर्वैः सह कुलद्वयं जातम्। अत्र मुनेस्तनयश्चित्ररथो गन्धर्वाणामाधिपत्यं शैशव एवाप्तवान्। अरिष्टायास्तु पुत्रो हंसश्चित्ररथेनैवाभिषिक्तो बाल एव राज्यपदमासादितवान्। हंसो गौरीं प्रणयिनीमकरोत्। तयोश्चाहमेकैवात्मजा महाश्वेतानामा समुत्पन्ना। क्रमेण च कृतं मे वपुषि नवयौवनेन पदम्। अथैकदाहमम्बया सहाच्छोदं सरः स्नातुमभ्यगमम्। अत्र सह सखीजनेन व्यचरम्। एकस्मिंश्च प्रदेशेऽनाघ्रातपूर्वं कुसुमगन्धमभ्यजिघ्रम्। कुतोऽयमित्युपारूढकुतूहला चाहं कतिचित्पदानि गत्वात्मानुरूपेण तापसकुमारेणानुगतं स्नानार्थमागतं मुनिकुमारकमपश्यम्। तेन च कर्णावतंसीकृतां कुसुममंजरीमद्राक्षम्। अस्या अयं परिमल इति मनसा निश्चित्य प्रेर्यमाणेव पुष्पधन्वनास्मै मुनिकुमाराय प्रणाममकरवम्।

अथ कृतप्रणामायां मयि तमपि तरलतामनयदनंगः। प्राप्तप्रसरा चोपसृत्य तं द्वितीयमस्य सहचरं मुनिबालकं प्रणामपूर्वकमपृच्छम्। भगवान्किमभिधानः कस्य चायं तपोवनयुवेति। स मामब्रवीत्। अस्ति महामुनिः श्वेतकेतुर्नाम। स कदाचिन्मन्दाकिनीमवततार। अवतरन्तं च तं तदा देवी लक्ष्मीर्ददर्श। तस्यास्तु तमवलोकयन्त्या

शनैस्तदनुसारिणी निरर्त्य दृष्टिमुपजातमत्सरावपर्णकृततरखण्डं ददर्श तच्च प्रविवेश। प्रविश्य च तस्य तरखण्डस्य मध्यभागे-ऽच्छोदं नाम सरो दृष्टवान्। तस्य च दक्षिणं तीरमासाद्य तुरगाद-वततार। अवतीर्य चेन्द्रायुधं सरोऽवतार्य पीतसलिलं चोत्थाप्य हस्तपाशशृंखलया चरणौ बद्ध्वा, क्षिप्त्वा चाग्रतः कतिचिद्दूर्वाप्रवा-लकवलान्पुनरपि सलिलमवततार। ततश्च कृत्वा जलमयमाहार-मुदतरत्‌ सलिलादुदगात्। कमलिनीपलाशेष्व लतामण्डपपरिक्षिप्ते शिला-तले स्रस्तरमास्तीर्य निधाय शिरसि पिण्डीकृतमुत्तरीयं निषसाद। मुहूर्तं विश्रान्तश्च गीतशब्दं शुश्राव। गीतध्वनिप्रभवजिज्ञासया कृतगमनबुद्धिः क्रमेण भगवतः शूलपाणेः शून्यं सिद्धायतनमपश्यत्। तच्च प्रविश्याद्राक्षीद्भगवन्तं त्र्यम्बकम्। तस्य च दक्षिणां मूर्तिमाश्रि त्याभिमुखीमासीनां कन्यकां ददर्श।

ततोऽवतीर्य तरुशाखायां बद्ध्वा तुरंगममुपसृत्य भगवते भक्त्या प्रणम्य त्रिलोचनाय तामेव दिव्ययोषितं पुनर्निरूपयामास। अथ गीतावसाने सा कन्यका समुत्थाय, कृतहरप्रणामा चन्द्रापीड माबभाषे। स्वागतमतिथये। अनुभूयतामतिथिसत्कार इति। कृतातिथ्यया च तयोपभुज्य फलानि पीत्वा च प्रस्रवणजलमुप-स्पृश्यैकान्ते यावदासते तावत्तयापि कन्यकया कृतो जलफलमूल-मयेष्वाहारेषु प्रणयः।

इति परिसमापितहारां चन्द्रापीडः सविनयमवादीत्। भगवति, किमर्थमस्मिन्कुसुमसुकुमारे नवे वयसि व्रतग्रहणम्। अपनयतु न

कौतुकम्। इत्येवमभिहिता सा शनैः प्रत्यवादीत्। राजपुत्र, किमनेन मम मन्दभाग्याया वैराग्यवृत्तान्तेन श्रुतेन। तथापि यदि कुतूहलं श्रूयताम्।

दक्षस्य प्रजापतेरतिप्रभूतानां कन्यकानां मध्ये द्वे सुते मुनिररिष्टा च बभूवतुस्ताभ्यां गन्धर्वैः सह कुलद्वयं जातम्। अत्र मुनेस्तनयश्चित्ररथो गन्धर्वाणामाधिपत्यं शैशव एवाप्तवान्। अरिष्टायास्तु पुत्रो हंसश्चित्ररथेनैवाभिषिक्तो बाल एव राज्यपदमासादितवान्। हंसो गौरीं प्रणयिनीमकरोत्। तयोश्चाहमेकैवात्मजा महाश्वेतानाम्ना समुत्पन्ना। क्रमेण च कृतं मे वपुषि नवयौवनेन पदम्। अथैकदाहमम्बया सहाच्छोदं सरः स्नातुमभ्यगमम्। अत्र सह सखीजनेन व्यचरम्। एकस्मिंश्च प्रदेशेऽनाघ्रातपूर्वं कुसुमगन्धमभ्यजिघ्रम्। कुतोऽयमित्युपारूढकुतूहला चाहं कतिचित्पदानि गत्वात्मानुरूपेण तापसकुमारेणानुगतं स्नानार्थमागतं मुनिकुमारकमपश्यम्। तेन च कर्णावतंसीकृतां कुसुममंजरीमद्राक्षम्। अस्या अयं परिमल इति मनसा निश्चित्य प्रेर्यमाणेव पुष्पधन्वनास्मै मुनिकुमाराय प्रणाममकरवम्।

अथ कृतप्रणामायां मयि तमपि तरलतामनयदनंगः। प्राप्तप्रसरा चोपसृत्य तं द्वितीयमस्य सहचरं मुनिबालकं प्रणामपूर्वकमपृच्छम्। भगवान्कमभिधानः कस्य चायं तपोवनयुवेति। स मामब्रवीत्। अस्ति महामुनिः श्वेतकेतुर्नाम। स कदाचिन्मन्दाकिनीमवततार। अवतरन्तं च तं तदा देवी लक्ष्मीर्ददर्श। तस्यास्तु तमवलोकयन्त्या

मन्मथविकृतं मन आसीत्। तस्माच्च कुमारः समुदपादि। सा भगवन् तवायमात्मज इत्युक्त्वा तस्मै श्वेतकेतवे तं ददौ। असावपि तस्य पुण्डरीक इति नाम चक्रे। इत्युक्तवति तस्मिन्स तपोधनयुवा समुपसृत्यात्मीयाच्छ्रवणादपनीय मदीयश्रवणपुटे तां कुसुममञ्जरीमकरोत्। मम तु तत्करस्पर्शलोभेन पुलकमासीत्। स च करतलादक्षमालां गलितामपि नाज्ञासीत्। अथाहं तामक्षमालां गृहीत्वा कण्ठाभरणतामनयम्।

इत्थंभूते च व्यतिकरे छत्रग्राहिणी मामवोचत्। भर्तृदारिके, स्नाता देवी। तत्क्रियतां मज्जनविधिरिति। अहं तु तेन तस्या वचनेन स्नातुमुदचलम्। उच्चलितायां च मयि द्वितीयो मुनिदारकस्तथाविधं तस्य धैर्यस्खलितमालोक्यावादीत्। सखे पुण्डरीक, कुतस्तवापूर्वोऽयमद्येन्द्रियोपप्लवः। कथं करतलाद्गलितामपहृतामक्षमालामपि न लक्षयसि। इदमपि तावदपह्रियमाणमनयानार्यया निवार्यतां हृदयमिति। अहं त्वम्बया सह नमेव चिन्तयन्ती स्वभवनमयासिषम्। गत्वा च प्रविश्य कन्यान्तःपुरमारुह्य कुमारीपुरप्रासादं विसर्ज्य च सखीजनं निस्पन्दमतिष्ठम्।

अथ छत्रग्राहिणी समागत्याकथयत्। भर्तृदारिके, तयोर्मुनिकुमारयोरन्यतरो द्वारि तिष्ठति कथयति चाक्षमालामुपयाचितुमागतोऽस्मीति। अहं तु समाहूयान्यतमं कञ्चुकिनं गच्छ प्रवेशयतामित्यादिश्य प्राहिणवम्। अथ मुहूर्तादिव कपिञ्जलनामानमृषिकुमारकमलक्षयम्। उत्थाय च कृतप्रणामा सादरं स्वयमासनमुपाहरम्।

अथ मुहूर्तमिव स्थित्वा किमपि विवक्षुरिव स तस्यां मम सख्यां तरलिकायां चक्षुरपातयत्। अहं तु विदिताभिप्राया दृष्ट्वैव भगवन्नव्यतिरिक्तेयमस्मच्छरीरादशंकितमभिधीयतामित्यवोचम्।

एवमुक्तश्च मया कपिञ्जलः प्रत्यवादीत्। राजपुत्रि, किं ब्रवीमि। क्व कन्दमूलफलाशी शान्तो वननिरतो मुनिजनः पुण्डरीकः। क्वायमनुपशान्तजनोचितो रागप्रायः प्रपञ्चः। अधुना त्वकालान्तरक्षमश्चायमस्य मदनविकारः। तदेवमवस्थिते यदत्रावसरप्राप्तं तत्र प्रभवति भवतीत्यभिधाय स तूष्णीमासीत्। अहं तु तदाकर्ण्य तत्क्षणमचिन्तयम्। दिष्ट्या तावदयमनंगो मामिव तमप्यनुबध्नाति। इत्येवं विचारयन्त्या एव प्रतिहारी मामकथयत्। भर्तृदारिके, त्वमस्वस्थशरीरेति परिजनादुपलभ्य महादेवी प्राप्तेति। तच्च श्रुत्वा कपिञ्जलः प्रययौ। अम्बा तु मत्समीपमागत्य सुचिरं स्थित्वा स्वभवनमयासीत्।

गतायां च तस्यां तरलिकयानुगम्यमाना प्रासादशिखरादवातरम्। अवतीर्य च प्रयान्ती सरसः पश्चिमे तटे पुरुषस्येव रुदितध्वनिमुपालक्षयम्। विलपन्तं च कपिञ्जलमश्रौषम्। तच्च श्रुत्वा प्रस्खलन्ती पदे पदे केनाप्युत्क्षिप्य नीयमानेव तं प्रदेशं गत्वा तत्क्षणविगतजीवितं तमहं महाभागमद्राक्षम्।

ततश्च मरणैकनिश्चया तत्तद्बहु विलप्य तरलिकामब्रवम्। अयि उत्तिष्ठ। काष्ठान्याहृत्य विरचय चिताम्। अनुसरामि जीवितेश्वरमिति। अत्रान्तरे चन्द्रमण्डलविनिर्गतो गगनादवतीर्य पुरुषो

दिव्याकृतिर्गम्भीरेण स्वरेण वत्से महाश्वेते न परित्याज्यास्त्वया प्राणा पुनरपि तवानेन सह भविष्यति समागम इत्येवमभिधाय सहैवानेन गगनतलमुदपतत्। अहं तु सभया किमिदमिति कपिञ्जलमपृच्छम्। असौ तु ससम्भ्रममदत्त्वैवोत्तरमुदतिष्ठत्। दुरात्मन् क्व मे वयस्यमपहृत्य गच्छसीत्यभिधायोत्पतन्त तमेवानुसरन्नन्तरिक्षमुदगात्। पश्यन्त्या एव च मे सर्व एव ते तारागणमध्यमविशन्।

अहं तु ता कालरात्रिप्रतिमा तस्मिन्नेव सरस्तीरे तरलिका द्वितीया क्षपा क्षपितवती। प्रत्युषसि तूत्थाय तस्मिन्नेव सरसि स्नात्वा गृहीतब्रह्मचर्या शरणार्थिनी स्थाणुमाश्रिता। अपरेद्युश्च कुतोऽपि समुपलब्धवृत्तान्तस्तात सहाम्बयागत्य गृहागमनाय मे महान्त यत्नमकरोत्। यदा च नेयमस्माद्व्यवसायात्कथचिदपि शक्यते व्यावर्तयितुमिति निश्चयमधिगतवास्तदा स गृहानयासीत्। गते च ताते प्रतिदिनमर्चयन्ती देव त्र्यम्बकमस्यामेम गुहाया तरलिकया सह चिरमवसम्। साहमेवविधा पापकारिणी। किं मया दृष्टया पृष्टया वा करोति महाभाग। इत्युक्त्वातिचिरमुच्चै प्रारोदीत्।

चन्द्रापीडस्त्वापतन्ति हि ससारपथमतिगहनमवतीर्णानामेते वृत्तान्ता। धीरा हि तरन्त्यापदम्। इत्येवविधैरन्यैश्च मृदुभिरपसान्त्वनै संस्थाप्य ता प्रक्षालितमुखीमकारयत्। पुन पप्रच्छ चैनाम्। भगवति, तरलिका क्व गतेति।

अथ साकथयत्। महाभाग, यदमृतसभवमप्सरसा कुल तस्मा

न्मदिरेति नाम्ना कन्यकाभूत्। तस्या देवश्चित्ररथ पाणिमग्रहीत्। तयोर्दुहितृरत्नमुदपादि कादम्बरीति नाम्ना। सा च मे जन्मनः प्रभृति बालमित्रम्। सा मदीयेन हतवृत्तान्तेन समुपजातशोका निश्चयमकार्षीत्। नाहं कथंचिदपि सशोकायां महाश्वेतायामात्मनः पाणिं ग्राहयिष्यामीति। सर्वं च तदात्मदुहितुर्निश्चलभाषितं परिजनसकाशाद्गन्धर्वराजश्चित्ररथः स्वयमशृणोत्। गच्छति काले समुपारूढनिर्भरयौवनामालोक्य तां स न धृतिमलभत। एकापत्यतया च न शक्तः किंचिदपि तामभिधातुमित्यपश्यंश्चान्यदुपायानन्तरमिदमत्र प्राप्तकालमिति मत्वा, क्षीरोदनामानं कञ्चुकिनं वत्से महाश्वेते कादम्बरीमनुनेतुं त्वं शरणमिति सन्दिश्य मत्समीपमद्यैव प्रत्यूषसि प्रेषितवान्। ततो मया क्षीरोदेन सार्धं सा तरलिका सखि कादम्बरि कुरु गुरुवचनमवितथमिति सदिश्य विसर्जिता। इत्यभिधाय तूष्णीमभवत्। अत्रान्तरे भगवानुदगात्तारकारातिः। क्रमेण चोद्गते कुमुदबान्धवे चन्द्रापीडं सुप्तामालोक्य महाश्वेता पल्लवशयने शनैः समुपाविशत्। निद्रा च ययौ।

अथ क्षीणायां क्षपायां तरलिका गन्धर्वदारकेण केयूरकनाम्नानुगम्यमाना प्रत्यूषस्येव प्रादुरासीत्। आगत्य च महाश्वेतायाः समीपमुपसृत्य कृतप्रणामा सविनयमुपाविशत्। अनन्तरं प्रणम्य केयूरकोऽपि शिलातलं भेजे। समुपविष्टश्च रूपातिशयं चन्द्रापीडस्य दृष्ट्वा विस्मयमापेदे। परिसमाप्तजपा तु महाश्वेता पप्रच्छ तरलिकाम्। किं त्वया दृष्टा प्रियसखी कादम्बरी। करिष्यति वा तदस्मद्वचनमिति।

अथ केयूरकोऽब्रवीत्। भर्तृदारिके, देवी कादम्बरी त्वां विज्ञापयति। येनेदृशीं दशामुपनीता प्रियसखी कथमतिदारुणं तमहं विषमिवाप्रियकारिणं कामं सकामं कुर्याम्। इत्यभिधाय तूष्णीमभूत्।

महाश्वेता तु तच्छ्रुत्वा सुचिरं विचार्य गच्छ स्वयमेवाहमागत्य यथार्हमाचरिष्यामीत्युक्त्वा केयूरकं प्राहिणोत्। गते च केयूरके चन्द्रापीडमुवाच। राजपुत्र, यदि नातिखेदकरमिव गमनं कल्पयसि ततो मयैव सह गत्वा दृष्ट्वा च मतिविशेषां कादम्बरीमेकमहो विश्रम्य श्वोभूते प्रत्यागमिष्यसि। इत्युक्तवतीं च चन्द्रापीडोऽब्रवीत्। भगवति, दर्शनात्प्रभृति परवानयं जनः। इत्यभिधाय तया सहैवोदचलत्।

क्रमेण च गत्वा हेमकूटमासाद्य गन्धर्वराजकुलं कादम्बरीभवनसमीपमुपययौ कादम्बरीं च ददर्श। कादम्बरी तु महाश्वेतां सोत्कण्ठं कण्ठे जग्राह। महाश्वेतापि दृढतरदत्तकण्ठग्रहा तामवादीत्। सखि कादम्बरि भारते वर्षे राजा तारापीडो नाम। तस्यायं चन्द्रापीडो नाम सूनुः। एष च दर्शनात्प्रभृति प्रकृत्या मे निष्कारणबन्धुतां गतः। तदपूर्वदर्शनोयमिति विमुच्य लज्जामपहाय शङ्कां यथा मयि तथात्रापि वर्तितव्यम्। इत्यावेदिते तया चन्द्रापीडः प्रणाममकरोत्।

कादम्बरी तु सविभ्रमकृतप्रणामा महाश्वेतया सह पर्यङ्के निषसाद। पीठिकायां च चन्द्रापीडः समुपाविशत्। मुहूर्तापगमे च ताम्बूलदानोद्यतां महाश्वेता तामभाषत। सखि कादम्बरि, सर्वाभिर-

स्वामिरयमभिनवागतश्चन्द्रापीड आराधनीयः। तदस्मै तावद्दीयताम्। इत्युक्ता च गृहाण त्वमेवास्मै प्रयच्छेत्युवाच सा ताम्। पुनः पुनरभिधीयमाना च तया कथमपि ग्राम्येव चिराद्दानाभिमुखं मनश्चक्रे। कृतप्रयत्ना च प्रसारयामास ताम्बूलगर्भं हस्तपल्लवम्। चन्द्रापीडस्तु प्रसारितवान् पाणिम्। तत्र च सा गृह्यतामयं मन्मथेन दत्तो दासजन इत्यात्मानमिव प्रतिग्राहयन्ती ताम्बूलमदात्। आकर्षन्ती च करकिसलयं हृदयमिव पतितमपि रत्नवलयं नाज्ञासीत्। गृहीत्वा चापरं ताम्बूलं महाश्वेतायै प्रायच्छत्।

अत्रान्तरे चागत्य कञ्चुकी महाश्वेतामवोचत्। आयुष्मति, देवश्चित्ररथो देवी च मदिरा त्वां द्रष्टुमाह्वयते। इत्येवमभिहिता च गन्तुकामा सखि चन्द्रापीडः क्वास्तामिति कादम्बरीमपृच्छत्। असौ तु विहस्य प्रकाशमवदत्। सखि महाश्वेते दर्शनादारभ्य शरीरस्याप्ययमेव प्रभुः किमुत भवनस्य। तच्छ्रुत्वा महाश्वेता तदत्रैव स्व स्मप्रासादसमीपवर्तिनि प्रमदवने क्रीडापर्वतकमणिवेश्मन्यास्तामित्यभिधाय गन्धर्वराजं द्रष्टुं ययौ। चन्द्रापीडोऽपि तयैव सह निर्गत्य क्रीडापर्वतमणिमन्दिरमगात्। क्रीडापर्वतकशिखरं चारुरोह। कादम्बरी तु तं दृष्ट्वा सौधस्योपरितनं तलमारुरोह। तत्र च तं विलोकयन्ती तेन च विलोक्यमाना महान्तमपि कालमतिक्रान्तं नाज्ञासीत्। आरुह्य च प्रतिहार्या निवेदितमहाश्वेताप्रत्यागमना तस्मादवततार दिवसव्यापारं चाकरोत्। चन्द्रापीडोऽपि तस्मादवतीर्य क्रीडापर्वतक एव सर्वमाहारादिकमहःकर्म चक्रे। अथ चन्द्रापीडो निरभिमानतां कादम्बर्या

निष्कारणवत्सलतां च महाश्वेताया अतिसमृद्धिं च गन्धर्वलोकस्य मनसा भावयन्क्षणदां क्षपितवान्।

क्रमेण च समुद्गते सवितरि चन्द्रापीडः कृतसन्ध्यानमस्कृतिर्गन्धर्वराजतनयामालोकयितुमाजगाम। महाश्वेतां कादम्बरीं च दृष्ट्वा कृतनमस्कार आसनं भेजे। महाश्वेता तु विदिताभिप्राया कादम्बरीमब्रवीत्। सखि, भवत्या गुणैश्चन्द्रापीडो न शक्नोति वक्तुम्। जिगमिषति खलु कुमारः। अतोऽभ्यनुजानातु भवतीति। अथ कादम्बरी सखि स्वाधीनोऽयं जनः कुमारस्येत्यभिधाय गन्धर्वकुमारानाहूय प्रापयत कुमारं स्वां भूमिमित्यादिदेश। चन्द्रापीडोऽप्युत्थाय प्रणम्य प्रथमं महाश्वेतां ततः कादम्बरीं तस्याश्च प्रेमस्निग्धेन चक्षुषा मनसा च गृह्यमाणो देवि किं ब्रवीमि बहुभाषिणो न श्रद्दधाति लोकः स्मर्तव्योस्मि परिजनकथास्वित्यभिधाय कन्यान्तःपुरान्निर्जगाम।

क्रमेण च प्राप्य महाश्वेताश्रममच्छोदसरस्तीरे संनिविष्टं स्कन्धावारमपश्यत्। संमानिताशेषराजलोकश्च वैशम्पायनेन पत्रलेखया च सहैवं महाश्वेतैवं कादम्बरीत्यनयैव कथया प्रायो दिवसमनैषीत्। अपरेद्युश्च समुत्थिते भगवति रवौ केयूरकं ददर्श। तं च पप्रच्छ। केयूरक कथय कुशलिनी देवी सपरिजना कादम्बरी भगवती महाश्वेता चेति। असौ तु प्रणम्यावोचत्। अद्य कुशलिनी यामेवं देवः पृच्छति। संदिष्टं च तव महाश्वेतया। बलवदस्वस्थशरीरा कादम्बरी। स्मरति च स्मरकल्पं त्वाम्। अतः पुनरागमनगौरवेणात्मीयां गुणादभिमा-

निर्नीं कर्तुमिति।

चन्द्रापीडस्तदाकर्ण्य निर्गमिपुरश्वोश्व इति वदन्नवनाभिर्ययौ। आरोपितपर्याणमिन्द्रायुधमारुह्य पश्चादारोप्य पत्रलेखां स्कन्धावारे स्थापयित्वा वैशम्पायनं केयूरकेणानुगम्यमानो हेमकूटं ययौ। आसाद्य च कादम्बरीभवनद्वारमवततार कादम्बरीं च व्यलोकयत्। अथ सा कुसुमशयनादुदस्थौ। चन्द्रापीडस्तु समुपसृत्य पूर्ववदेव तां महाश्वेताप्रणामपुरःसरं दर्शितविनयः प्रणनाम शिलायामेव चोपाविशत्। अथ केयूरको देवि देवस्य चन्द्रापीडस्य प्रसादभूमिरेषा पत्रलेखा नाम ताम्बूलकरङ्कवाहिनीत्यभिधाय पत्रलेखामदर्शयत्। अथ कादम्बरी दृष्ट्वा कृतप्रणामां च तां सादरं समुपावेशयत्।

ततश्चन्द्रापीडोऽब्रवीत्। देवि जानामि कामरतिं निमित्तीकृत्य प्रवृत्तोऽयमविचलसंतापतन्त्रो व्याधिः। सुतनु सत्यं न तथा त्वामेव व्यथयति यथास्मान्। इच्छामि देहदानेनापि स्वस्थामत्रभवतीं कर्तुमिति। ततो मदलेखा प्रत्यवादीत्। कुमार किं कथयामि। दारुणोऽयमकथनीयः खलु सन्तापः। धीरत्वमेव प्रागसन्वारणहेतुरस्या इति। चन्द्रापीडोऽपि कथाभिर्महान्तं कालं स्थित्वा तथैव महता यत्नेन मोचयित्वात्मानं स्कन्धावारगमनाय कादम्बरीभवनान्निर्ययौ। निर्गतं च केयूरकोऽभिहितवान्। देव मदलेखा विज्ञापयति। देवी कादम्बरी पत्रलेखां निवर्त्यमानामिच्छति पश्चादास्यतीति श्रुत्वा देवः प्रमाणमिति। आकर्ण्य चन्द्रापीडः केयूरक धन्या पत्र

लेखा यामेवमनुबध्नाति दुर्लभो देवीप्रसाद: प्रवेदयतामित्यभिधाय पुन: स्कन्धावारमेवाजगाम। प्रविशन्नेव पितु: समीपादागतमालेखहारकमद्राक्षीत्। अथासावुपसृत्य लेखद्वितयमर्पयांबभूव। युवराजस्तु शिरसि कृत्वा स्वयमेव च तदुन्मुच्य क्रमश: पपाठ।

अथ यथाज्ञापयति तात इत्युक्त्वा महाबलाधिकृतं मेघनादनामानमादिदेश। भवता पत्रलेखया सहागन्तव्यम्। नियतं च केयूरकस्तामादायैतावतीं भूमिमागमिष्यतीति। एवमादिश्य तं सुहृदादिसाधनमस्क्लेशयता शनै: शनैर्गन्तव्यमित्युक्त्वा वैशम्पायनं स्कन्धावारभरे न्ययुंक्त। स्वयमपि च तयारूढ एवोज्जयिनीमार्गं पृच्छन्प्रतस्थे। अल्पैरेवाहोभिश्चोज्जयिनीमाजगाम पत्रलेखाऽगमनं च प्रत्यपालयत्। तत: कतिपयदिवसापगमे मेघनाद: पत्रलेखामादायागच्छत्।

एकदा चन्द्रापीड: सिप्रातटान्यनुसरन्नातिदूरमिव चरणाभ्यामेव बभ्राम केयूरकं चाद्राक्षीत्। दृष्ट्वा च केयूरक कथय देव्या: कादम्बर्या: समदलेखाया महाश्वेतायाश्च सन्देशम्। इत्यभिहितवति चन्द्रापीडे केयूरकोऽप्यगादीत्। देव किं विज्ञापयामि। यदैव पत्रलेखा मेघनादाय समर्प्यागतेन प्रतिनिवृत्य मयायं देवस्योज्जयिनीगमनवृत्तान्तो निवेदितस्तदैवोर्ध्वं विलोक्य दीर्घमुष्णं च निश्वस्य महाश्वेता पुनस्तपसे स्वमेवाश्रमपदमाजगाम। देव्यपि कादम्बरी मूर्छितेव वंचितेव च चिरमालोकितवती। इत्यावेदयन्तं केयूरकं चन्द्रापीड: प्रत्युवाच। केयूरक देवीं संभावयितुं प्रयतामहे स तु व्यज्ञपयत्।

देव धैर्यं समवलम्ब्य गमनाय यत्न क्रियताम्। एव वन्त तमादि देश विश्रान्तये केयूरकम्। आत्मनापि गमनचिन्ता प्राविशन्। यदि तावदकथयित्वा सहसानुत्सवलित एव तातेनाम्बया वापत्रम्य गच्छामि ततो गतस्यापि मम कुत सुखम्। अपि च स इहुदिव समवासोपतप्त स्कन्धावारोऽपि मेद्यापि न परापतति। वैशम्पाय नोप्यसनिहित पार्श्वे मे। कं पृच्छामि। को वापरो मयानुकोपित तातमम्बा च परिबोध्य मा नेतु समर्थ।

इत्येव चिन्तयत एवास्य सा क्षपा क्षयमगमत्। प्रातरेव च किंवदन्ती शुश्राव यथा किल दशपुर यावत्परागत स्कन्धावार इति। ता च श्रुत्वा केयूरकमवादीन्। केयूरक करतलवर्तिनीं सिद्धिमधुनावधारय। प्राप्तो वैशम्पायन इति। स तु तदाकर्ण्य चन्द्रापीड न्यवेदयत्। यावद्वैशम्पायन परापतति यावच्च तेन सह गमनसविधान निरूपयति देवस्तावदवश्य कालक्षेपेण भाव्यम्। यादृशी चाकालक्षमा देव्या शरीरावस्था तादृशी निवेदितैव मया। इति विज्ञापिते केयूरकेण चन्द्रापीड प्रत्युवाच। गम्यता देव्या प्राणसधारणाय। मदागमनप्रत्ययार्थं च पत्रलेखाप्यतस्त्व-यैव सह यातु देवीपादमूलम्। अहमपि वैशम्पायनमालोक्यानुपद मेव ते तुरगमै परागत इति।

अथ निर्गताया च केयूरकेण सह पत्रलेखाया चन्द्रापीड पितु पादमूलमगात्। अथ तारापीडो दूरत एव कृतप्रणाम चन्द्रा पीडमालोक्य शुकनासमवादीत्। विवाहमङ्गलयोग्या दशामा

रूढोऽयम्। तद्देव्या विलासवत्या सह संमन्त्र्याभिनवकृत्य निरूप्यतां काचिज्जगति रागमन्थश। इत्युक्तवति तारापीडे शुकनासः प्रत्युवाच। साधु चिन्तितं देवेनेति। चन्द्रापीडोऽपि शुक-नासमुखेनैव वैशम्पायनप्रत्युद्गमनायात्मानं मोचयित्वा जननीभवन एव तं दिवसमनयत्। अनन्तरं चेन्द्रायुधमारुह्य दशपुरगामिना मार्गेण प्रावर्तत गन्तुम्। महाजलधेर्लीलया निविशमानं स्कन्धावारं चाद्राक्षीत्। प्रविश्य कस्मिन्प्रदेशे वैशम्पायनावास इति पप्रच्छ। ते चैवं पृष्टा व्यज्ञपयन्। देव, श्रूयतां यथा वृत्तम्।

पृष्ठतः स्कन्धावारमनुपालयद्भिर्वैशम्पायनेन सह भवद्भिराग-न्तव्यमित्यादिश्य गतवति देवे वैशम्पायनोऽभ्यधात्। अतिपुण्यं ह्यच्छोदाख्यं सरः पुराणे श्रूयते। तदस्मिन्स्नात्वा प्रणम्य महेश्वरं व्रजामः। इत्यभिधाय चरणाभ्यामेवाच्छोदसरस्तीरमयासीत्। तत्र च तटलतामण्डपमद्राक्षीत्। दृष्ट्वा च पुनः पुनरस्माभिरागमनायानुरु-ध्यमान आह स्म। मया तु न यातव्यमस्मात्प्रदेशात्। गच्छन्तु भवन्तः स्कन्धावारमादाय। इत्युक्त्वा तूष्णीमभूदिति।

चन्द्रापीडस्य तु तं वैशम्पायनवृत्तान्तमाकर्ण्योदपादि चेतसि। किं पुनरीदृशस्य वैराग्यस्य कारणं भवेत्। इत्याक्षिप्तचेताः कटक-लोकेनैव सह विवेशोज्जयिनीम्। अवतीर्य च स राजकुलद्वारि विरान्नेवार्यशुकनासभवनं सह देव्या विलासवत्या गतो राजेति शुश्राव। श्रुत्वा च निवृत्य तत्रैव जगाम मनोरमां च विलपन्तीम-श्रौषीत्। तेन चातिकरुणेन तत्प्रलापविषेण विह्वल इव पितुरपि

लज्जमानो शुकनाथेन सहोपविष्ट प्रणम्य पितर दूरत एवोपाविशत्। उपविष्ट च त राजाभ्यधात्। वत्स चन्द्रापीड जानामि ते स्व जीवितादपि समभ्यधिका भ्रातुरुपरि प्रीतिम्। इम भ्रातु सुहृदश्च ते वृत्तान्तमाकर्ण्य त्वद्दोषमाशङ्कते मे हृदयम्। इत्येव वादिनो नरपतेर्वचनमाक्षिप्य शुकनासोऽब्रवीत्।

देव, यदि चन्द्रमस्यू भा सभाव्यते ततो युवराजेऽपि दोष। तत्किमेवमेवानिरूप्य तस्यानात्मज्ञस्य कृते कृतयुगावतारयोग्य चन्द्रापीडमेव सभावयति देव। न ह्यत परमपर कष्टतर किंचिदपि पीडाकारण यद्गुणेषु वर्तमाना दोषेषु सभाव्यत इतरजनेनापि। किं पुनर्गुरुजनेन। इत्युक्त्वा स्फुरितान्तर्मन्युदूरेण निश्वसन्नेवावतस्थौ। तदवस्थ च त तारापीड प्रत्युवाच। स्वयमारोपितेषु तरुषु यावत्तुल्य धत्ते स्नेह। किं पुनरङ्कसवर्धितेष्वपत्येषु। तदुत्तुल्यनामयसमर्पयेगो वैशम्पायनस्योपरि। आनीयता तावदसौ। ततो यथायुक्त विधास्याम।

इत्युक्तवति तारापीडे चन्द्रापीड शनै शनै शुकनासमवादीत्। आर्य दापयतु मे वैशम्पायनानयनाय गमनाभ्यनुज्ञा तातेन। नान्यथा मे दोषशुद्धिर्भवति। तत्प्रतिगमनेऽपाकरोतु मामार्य। इत्यभिहितवति चन्द्रापीडे गमनाय विज्ञापयति युवराज किमाज्ञापयति देव इति शनै शनै शुकनासो राजानमप्राक्षीत्। तथा पृष्टश्च शुकनासेन किंचिदिव ध्यात्वा तारापीड प्रत्यवादीत्। आर्य यथायुष्मताभिहित मेवैतत्। न तमन्य शक्नोत्यानेतुम्। वैशम्पायनप्रत्यानयनाय चावश्य द्वेऽपि विश्वासवती विसर्जयिष्यत्येवैनमिति निश्चयो मे। तद्यातु।

एतदभिधाय चन्द्रापीडमादिशत्। वत्स गच्छ त्वमेव प्रविश्याभ्यन्तरं मनोरमासहिताया मातुरावेदयात्मगमनवृत्तान्तम्। इत्यादिश्य चन्द्रापीडमात्मना शुकनासमादाय स्वभवनमयासीत्। चन्द्रापीडस्तु कृतनमस्कारो मातु समीपे समुपविश्यात्मदर्शनद्विगुणीभूतवैशम्पायनविरहशोकविह्वलां मनोरमामाश्वास्यावादीत्।

अम्ब समाश्वसिहि। वैशम्पायनानयनाय तातेन मे गमनमादिष्टम्। तन्मां विसर्जय त्वम्। सा त्वेवमभिहिता प्रत्युवाच। तात त्वयि गते तस्यादर्शनं जीवितप्रतिबन्धहेतुभूतं त्वद्दर्शनं तदपि दूरीभवति। तन्न गन्तव्यं वत्सेन। इत्युक्तवत्यां मनोरमायां विलासवती धीरमुवाच। प्रियसखि अयं पुनर्वैशम्पायनेन विना क पश्यतु। तदुत्तिष्ठ गच्छावो गमनसंविधानाय वत्सस्य चन्द्रापीडस्येति।

अथ चन्द्रापीडो निरगान्नगयां। निर्गत्य च पुनर्महाश्वेतां पश्यामि। तया सहैव हेमकूटं गच्छामि। कादम्बरीं चालोकयन्कृतार्थतां नयामि चक्षुषी। उत्पन्नविश्रम्भां च देवीमेवाभ्यर्थ्य वैशम्पायनस्यापि मदलेखया सह घटनां कारयामीत्येतानि चान्यानि च चिन्तयन्दिवा रात्रौ चावहत्। तदेवाच्छोदं चासाद्य महाश्वेताश्रममुपजगाम। तत्र च द्वारप्रदीनदृष्ट्या कथं कथमपि तरलिकया विधृतशरीरां महाश्वेतामपश्यत्। दृष्ट्वा च तां किमेतदिति तरलिकामपृच्छत्।

अथ महाश्वेतैव प्रत्यवादीत्। महाभाग श्रूयताम्। केयूरकाद्भवदागमनमाकर्ण्य गाढमन्यान्कादम्बरीस्नेहपाशानपि छित्वा पुनः कष्टतरतपश्चरणायाभिवायाता यावदत्र महाभागस्यैव तुल्याकृतिं ब्राह्मणयुवानम

पश्यम । स तु मामुपसृत्यानन्यदृष्टिर्मत्त इव सुचिरमालोक्याब्रवीत् । वरतनु सर्व एव हि जगति जन्मनो वयस आकृतेर्वा सदृशमाचरन्न वचनीयतामेति । यदि च त्वादृशी जीवलोकसुखेभ्यः पराङ्मुखी तपसा क्लेशयत्यात्मानं तदा वृथा वहति धनुरधिज्यं कुसुमकार्मुक इति । इत्थं च तं तादृशं निस्पृहाप्यात्मनि परं भयमुपगतवती चेतस्यचिन्तयम् । अहो कष्टमापतितमिति । स त्वेवं चिन्तयन्तीमेव मामुपसृत्याब्रवीत् । चन्द्रमुखि हन्तुमुद्यतो मामयं कुसुमशरसहायश्चन्द्रमाः । तच्छरणमागतोऽस्मीति । अहं तु तदाकर्ण्य क्रोधावेगरूक्षाक्षरमवदम् । आः पाप, अव्यवस्थितो व्यवस्थितेऽस्मिँल्लोके कुतस्त्वमुत्पन्न एवंविधः । यस्तिर्यग्जातिरिव कामचारी शुक इव वक्तुमेव शिक्षितस्तेनैव किमु तस्यामेव जातौ न निक्षिप्तोऽसि । इत्युक्त्वा चन्द्राभिमुखी भूत्वा कृताञ्जलिः पुनरवदम् । भगवन्परमेश्वर यदि मया देवस्य पुण्डरीकस्य दर्शनात्प्रभृति मनसाप्यपरः पुमान्न चिन्तितस्तदानेन मे सत्यवचनेनायमलीककामी मदुदीरितायामेव जातौ पतत्विति । स च मे वचसोऽस्यानन्तरमेव क्षितावपतत् । अतिक्रान्तजीवितेऽस्मिन्कृताक्रन्दात्तत्परिजनाच्छ्रुतवती यथासौ महाभागस्यैव मित्रं भवति । इत्युक्त्वा च त्रपावनम्रमुखी महीयसाश्रुवेगेन तूष्णीमेवास्थितवती ।

चन्द्रापीडस्य तु तदाकर्ण्य हृदयमस्फुटत् । अथ महाश्वेताया शरीरमुत्सृज्य सम्भ्रमप्रनिपन्नचन्द्रापीडशरीरायां तरलिकायां, तिर्यग्भुग्नचन्द्रापीडमुखनिहितनिश्चलस्तब्धदृष्टिनिश्चेष्टायां महाश्वेतायां,

आः पापे दुष्टतापसि किमिदं त्वया कृतमित्युक्तवति परिजने, हा हा किमेतदित्युद्भ्रान्तमनसि समापतति राजपुत्रलोके, दीनतरहेषारवश्रुताक्रन्दे शुचेव तुरंगमतां मुमुक्षतीवेन्द्रायुधे, पत्रलेखानिवेदितचन्द्रापीडागमना नातिबहुना परिजनेनानुगम्यमाना कादम्बरी चन्द्रापीडदर्शनायोत्ताम्यन्ती तत्रैवाजगाम।

आगम्य चोन्मुक्तजीवितं चन्द्रापीडमद्राक्षीत्। दृष्ट्वा च तं सहसा हा किमिदमित्यधोमुखी धरातलमुपयान्ती कथं कथमपि मुक्ताक्रन्दया मदलेखयाधार्यत। पत्रलेखा पुनरभ्युच्य कादम्बरीकरतलमचेतना क्षितिमुपागमत्। चिराच्च लब्धसंज्ञापि कादम्बरी लिखितेव तस्थौ। तथावस्थितां च तां मदलेखाब्रवीत्। प्रियसखि सहस्रधा स्फुटति ते हृदयमित्यपेक्षस्व देवीं मदिरां देवं च चित्ररथम्। इत्युक्तवतीं मदलेखां कादम्बरी विहस्याब्रवीत्। अयुन्मत्तिके कुतोऽस्य मे वज्रसारकठिनस्य हतहृदयस्य स्फुटनम्। अधुना तु मे सर्वदुःखान्येव दूरीभूतानि। अस्मिन्समये मरणमेव जीवितम्। जीवितं पुनर्मरणम्। इत्यभिदधानेव महाश्वेतां कण्ठे गृहीत्वा तामवादीत्।

प्रियसखि आमन्त्रये त्वां पुनर्जन्मान्तरसमागमाय। इत्यभिधाय चन्द्रापीडचरणौ कराभ्यामुत्क्षिप्याङ्केन धृतवती। अथ तत्करस्पर्शेनोच्छ्वसत इव चन्द्रापीडदेहाज्झटिति ज्योतिरेवोज्जगाम। अनन्तरं चान्तरिक्षे वागश्रूयत। वत्से महाश्वेते चन्द्रापीडशरीरं त्वन एवाविनाशि नाग्निना संस्कर्तव्यम्। यत्नतः परिपालनीयमा-

समागमप्राप्तेरिति। तां तु श्रुत्वा किमेतदिति विस्मयाक्षिप्तहृदयः सर्व एव परिजनो लिखित इव पत्रलेखावर्जमतिष्ठत्। पत्रलेखा त्विन्द्रायुधेन सहात्मानमच्छोदसरस्यक्षिपत्।

अथ तयोर्निमज्जनसमयानन्तरमेव तस्मात्सरसस्तापसकुमारकः सहसैवोदतिष्ठत्। उत्थाय च महाश्वेतामुपसृत्यावादीत्। गन्धर्वराजपुत्रि, प्रत्यभिज्ञायतेऽयं जनो न वेति। सा त्वेवं पृष्टा कृतपादवन्दना प्रत्यवादीत्। भगवन्कपिञ्जल, कथय केनासौ देवः पुण्डरीक उत्क्षिप्य नीतः। स त्वेवं पृष्टो महाश्वेतया प्रत्यवादीत्। गन्धर्वराजपुत्रि, श्रूयताम्। अहं हि त्वामेकाकिनीं समुत्सृज्य क्व मे प्रियसुहृदमपहृत्य गच्छसीत्यभिधाय तं पुरुषमनुबध्नञ्जवेनोदपतम्। स तु चन्द्रलोकमगच्छत्। तत्र पर्यङ्के तत्पुण्डरीकशरीरं स्थापयित्वा मामवादीत्। कपिञ्जल, जानीहि मां चन्द्रमसम्। अहं ह्युदयगतोऽनेन ते प्रियवयस्येन संशप्तः। दुरात्मन्निन्दुहतक, यथाहं त्वया करैः संताप्योत्पन्नानुरागः समसंप्राप्तहृदयवल्लभासमागमसुखः प्राणैर्वियोजितस्तथा त्वमपि भारते वर्षे जन्मनि जन्मन्येवोत्पन्नानुरागोऽप्राप्तसमागमसुखो जीवितमुत्स्रक्ष्यसीति। अहं त्वुत्पन्नकोपस्त्वमपि मत्तुल्यदुःखसुख एव भविष्यसीति प्रतिशापमस्मै प्रायच्छम्। अपगतामर्षश्च विमृशन्महाश्वेताव्यतिकरमस्याभिज्ञातवानस्मि। अनेन च मया सह मर्त्यलोके वारद्वयमवश्यमुत्पत्तव्यम्। तद्यावदयं शापदोषादपैति तावदस्य शरीरस्य मा विनाशोऽभूदिति मयेदमुत्क्षिप्य समानीतम्। त्वं गत्वैनं वृत्तान्तं श्वेतकेतवे निवेदय। इत्युक्त्वा मां

व्यसनं नयत्।

अहं तु शोकावेगान्धो गीर्वाणवर्त्मनि धावन्नन्यतममतिरभसेनैवं वैमानिकमलङ्घयम्। स तु मां दहन्निव रोषप्रज्वलमुनावदीत्। दुरात्मन्ययाहं तुरंगमेणेवोल्लङ्घितस्तस्मात्तुरंगम एव भूत्वा मर्त्यलोकेऽवतरेति। अहं तु कृताञ्जलिरवदम्। भगवन्वयस्यशोकान्धेन त्वं मयोल्लङ्घितो नावज्ञया। तत्प्रसीदेति। स तु मां पुनरवादीत्। यन्मयोक्तं तन्नान्यथा भवितुमर्हति। तदेतत्ते करोमि कियन्तमपि कालं यस्यैव वाहनतामुपयास्यसि तस्यैवावसाने स्नात्वा निगतशापो भविष्यसीति। अहं तु तद्वचनान्तरमेवाधःस्थिते महोदधौ न्यपतम्। तस्माच्च तुरंगीभूयैवोदतिष्ठम्। संज्ञा तु मे तुरंगत्वेनापि न व्यपगता। येनायं मया किन्नरमिथुनानुसारी भूमिमेतामानीतो देवचन्द्रमसोऽवतारश्चन्द्रापीडः। योऽप्यसौ त्वया शापाग्निना निर्दग्धः सोऽपि मे वयस्यपुण्डरीकस्यावतारः।

इत्येतच्छ्रुत्वा हा देव पुण्डरीक अहमेव ते विनाशायोपजाता राक्षसीत्युन्मुक्तार्तनादा सोरस्ताडनमवनावात्मानमपातयन्महाश्वेता। कपिञ्जलस्तु सानुकम्पं तां पर्यबोधयत्। उपशान्तमन्युवेगायां च महाश्वेतायां कादम्बरी कपिञ्जलमप्राक्षीत्। भगवन्पत्रलेखया त्वया चास्मिन्सरसि जलप्रवेशः कृतः। तत्किं तस्याः संवृत्तमिति। स तु प्रत्यवादीत्। राजपुत्रि, सलिलपातानन्तरं न कश्चिदपि तद्वृत्तान्तो मया ज्ञातः। तदधुना क्व चन्द्रापीडस्य क्व पुण्डरीकात्मकस्य वैशम्पायनस्य च जन्म किं वा पत्रलेखाया वृत्तमिति सर्वमेवास्य वृत्तान्त-

स्यागमनाय गतोऽहं प्रत्यक्षलोकत्रयस्य तातस्य श्वेतकेतोः पादमूलम्। इत्यभिदधान एव गगनमुदपतत्।

अथ गते तस्मिन्कादम्बरी राजपुत्रलोकेन स्वपरिजनेन च सह निराहारा तं दिवसमक्षिपत्। यथैव च दिवसं तथैव तां क्षपां क्षपितवती। प्रातश्च राजपुत्रलोकः सर्व एव प्रणम्य चन्द्रापीडचरणौ रचिताञ्जलिः कादम्बरीं व्यज्ञापयत्। देवि त्वत्प्रभावोऽयं यदेवं देवस्य तादृशमेवेदं वीक्ष्यते वदनम्। इत्यभिहितवति राजलोके ससखीजना सपरिजना चोत्थाय स्वयमेवावाचित्य देवतार्चनकुसुमानि स्नात्वा निर्वर्तित चन्द्रापीडशरीरपूजासंस्कारा शरीरस्थितिकरणायादिदेश सकलमेव राजलोकम्। निर्वर्तितस्नानाशने च तस्मिन्नात्मनापि महाश्वेतयोपनीतानि तथैव सह सपरिवारा फलान्युपभुक्तवती। अन्येद्युश्च मदलेखामवादीत्। प्रियसखि, इममत्यद्भुतं वृत्तान्तं तातस्याम्बायाश्च गत्वा निवेदय। इत्यभिधाय तां व्यसर्जयत्। गत्वागतया च तया प्रियसखि संदिष्टं तातेनाम्बया च वत्से शापावसाने जामात्रा सहैवानन्दबाष्पनिर्भरमाननारविन्दं ते द्रक्ष्याव इत्यावेदिते निर्वृते नान्तरात्मना दैवतवदुपचरन्ती तच्चन्द्रापीडशरीरमतिष्ठत्।

अथ राजा तारापीडश्चन्द्रापीडस्य बालसेवकात्त्वरितकात्तदद्भुतमाकर्ण्य विलासवतीमवादीत्। देवि उत्तिष्ठ स्वयमेव धैर्यमालम्ब्य सर्ववृत्तान्तानुकथनेन संस्थापय मनोरमां तथा यथार्थशुकनासेन सह तत्र यातव्यम्। इत्येवोत्थाप्य सपरिजनां विलासवतीं व्यसर्जयत्। आत्मनापि शुकनासेन सह गमनसंविधानमकारयत्।

अथ राजा बहुभिर्दिवसैराससादाच्छोदम्। आसाद्य च महाश्वेताश्रममगमत्।

अथ सहसैव तच्चन्द्रापीडगुरुजनागमनमाकर्ण्य ह्रिया महाश्वेता गुहाभ्यन्तरमविशच्चित्ररथतनयापि मोहान्धकारम्। तदवस्थयोश्च तयोः शुकनासावलम्बितशरीरो राजा विवेशाश्रमपदं तदनु च मनोरमावलम्बिता विलासवती। प्रविश्य च सहजयैव कान्त्या सुप्तमिव तं पुत्रवत्सला तनयमालोक्य शिरः समाघ्राय कपोलौ चुम्बित्वोन्मुक्तकण्ठमरोदीत्। तथा रुदन्ती तु तां तारापीडोऽब्रवीत्। देवि, यद्यप्यावयोः सुकृतैरपत्यतामुपगतस्तथापि देवतामूर्तिरेवायम् अशोचनीयः। अपरमस्यामवस्थायामावाभ्यामपि तावत्परमवष्टम्भं कृत्वा मनोरमा शुकनासश्च सेवारणीयौ ययोर्लोकान्तरितो वैशम्पायनः। तिष्ठता तावदेतावपि। यस्याः प्रभावात्पुनरनुभवनीयो वत्सस्य जीवितप्रतिलम्भाभ्युदयमहोत्सवः सैवेयं गन्धर्वराजतनया वधूस्ते संज्ञां न प्रतिलभते। तदेनां तावदुत्थाप्याङ्के कृत्वा चेतनां लम्भय। ततो यथेच्छं रोदिष्यसि।

इत्यभिहिता राज्ञा विलासवती क्व सा मे वत्सस्य जीवितनिबन्धनवधूरित्यभिदधत्येव ससम्भ्रममुपसृत्याप्रतिपन्नसंज्ञामेवाङ्के नाराय कादम्बरीं करेण वदनमालोस्य समाश्वसिहि मातस्त्वममृतमयीव जातासि येन वत्सस्य चन्द्रापीडस्य पुनर्वदनमालोकित मित्यवादीत्। कादम्बरी तु लब्धसंज्ञापि प्रतिपत्तिमूढा मदलेखया-ऽभ्युत्थाय पादपतनेन यथाक्रममकारयत वन्दनां गुरूणाम्।

आयुष्मति, दीर्घकालमविधवा भवेति कृताशीर्वादा च शनैः शनैस्तैरत्याप्यमानातिनिकटे विलासवत्याः पृष्ठतः समुपवेश्यापायेन। अथ प्रत्यापन्नचेतनायां चित्ररथतनयायां राजा मदलेखामाहूयादिदेश। दर्शनसुखमात्रकमस्माकं विधीयमानम्। तच्चास्माभिरासादितम्। तथाद्यप्रभृतिनैवोपचारेणैतावतो दिवसानुपचरितवती वधूर्वत्सस्य शरीरं स एवोपचारो न मनागपि परिहरणीयः। इत्यादिश्य निर्जगाम। निर्गत्य च तस्यामण्डपे समुपविश्य सकलमेव राजचक्रमाहूय सबहुमानमवादीत्। न भवद्भिरवगन्तव्यं यथाद्य शोकावेगादेवैतदहमङ्गीकरोमीति। पूर्वचिन्तित एवायमर्थो यथा वधूसमेतस्य चन्द्रापीडस्य वदनमालोक्य संक्रामितनिजभरेण मया क्वचिदाश्रमपदे गत्वा पश्चिमं वयः क्षपितव्यमिति। प्रजापरिपालनफलं तु पुनर्भवद्भुजेष्वेवमक्षतेष्वविरहितमस्त्येव। तदिच्छामि चिरकाङ्क्षितं मनोरथं पूरयितुम्। इत्युक्त्वा संनिहितान्यपि परित्यज्योचितानि सर्वसुखानि, सर्वोपभोगरागं च वैराग्ये संक्रमय्य नरपतिः सपरिवारः समं देव्या शुकनासेन च तत्रैवातिष्ठत्।

इत्येव च कथयित्वा भगवाञ्जाबालिर्हारीतप्रमुखानवादीत्। दृष्टमायुष्मद्भिरिदं कथारसस्याक्षेपसामर्थ्यम्। यः स कादम्बरीवर्णनवेता दिव्यलोकतः परिभ्रश्य मर्त्यलोके वैशम्पायननाम्ना शुकनासस्नुरभवत् स एवैष पुनः स्वयंकृतेनाविनयेन कोपितस्य पितुराक्रोशान्महाश्वेता कृताच्च सत्याभिध्यानादस्यां शुकजातौ पतितः। इत्येवं वदत्येव भगवति जाबालौ बाल्येऽपि मे सुप्तप्रतिबुद्धस्येव पूर्वजन्मान्तरो

सुखमनुभविष्यामि। किं करेणावलम्ब्यासनपरिग्रहं कारयिष्यामीति। एवमात्मानमनुशोचन्तमेव मां कपिञ्जलः करद्वयेनोत्क्षिप्य मद्विरहदुःखदुर्बले वक्षसि निवेश्य चिरमरोदीत्।

तथा रुदन्तं तु तं वाङ्मात्रप्रतीकारः पुनरवदम्। सखे कपिञ्जल, अपि कुशलं तातस्य। मद्वृत्तान्तमाकर्ण्य किमुक्तवान्। कुपितो न वेति। स त्वेवमुक्तो मयाख्यातवान्। सखे कुशलं तातस्य। अयं चास्मद्वृत्तान्तः प्रथमतरमेव तातेन दिव्येन चक्षुषा दृष्टः। दृष्ट्वा च प्रतिक्रियायै कर्म प्रारब्धवान्। अधुना सिद्धप्रायमेवेदम्। अद्य च प्रातरेवाहूय मामाज्ञापितवान्। वत्स कपिञ्जल, महामुनेर्जाबालेराश्रमपदं सुहृत्ते प्राप्तः, जन्मान्तरस्मरणं चास्योपजातम्। तद्गच्छ सम्प्रति तं द्रष्टुम्। मदीयया चाशिषानुगृह्य वक्तव्योऽसौ। वत्स यावदिदं कर्म परिसमाप्यते तावत्त्वयास्मिन्नेव जाबालेः पादमूले स्यातव्यमिति। अपि च त्वद्दुःखदुःखिताम्बा ते श्रीरपि तस्मिन्नेव कर्मणि परिचारिका वर्तते। अहमपि तत्रैव कर्मणि व्यग्रतर एव। तद्व्रजामि सम्प्रति। अहं तु तच्छ्रुत्वा विषण्णवदनस्तं प्रत्यवदम्। सखे कपिञ्जल, गत किं ब्रवीमि। सर्वं त्वमेव वत्सीति। स त्वेवमुक्तो मया क्वाप्यदर्शनमगात्।

गते च तस्मिन्हारीतेन संवर्ध्यमानः कतिपयैरेव दिवसैः सजातपक्षोऽभवम्। उत्पन्नोत्पतनसामर्थ्यश्चैकदा महाश्वेतां द्रष्टुमुत्तराः ककुभं गृहीत्वावहम्। स्तोकमेव च गत्वा ममाङ्गानि दि मदितु

पात्ता समस्ता एव विद्या जिह्वाग्रेऽभवन्। मनुष्यशरीरादृते सर्वमन्यत्तत्क्षणमेव मे वैशम्पायनस्य स एव चन्द्रापीडस्योपरि स्नेह सैव कामपरवशता स एव महाश्वेतायामनुराग इत्युपगत सकलमेव। तथा चोत्सुकान्तरात्मा भगवन्त जाबालि व्यज्ञापयम्। भगवन्नहम पुण्यवानस्या तिर्यग्योनौ वर्तमान स्वय सर्वस्यैवाक्षम। वागपि मे भगवत प्रसादात्सप्रत्येवानने सभूता। भूतपूर्वं च ज्ञानमन्तरात्मनि। शरीर पुनरायु सवर्धकर्मयोग्य भगवत प्रसादादन्यस्मिञ्जन्मनि यदि भवेत्तत्केन प्रकारेणाक्षय तस्मै महाकर्मसाध्यमायु भविष्यतीत्येतदाज्ञापयतु भगवान्। इत्येव विज्ञापितस्तु मया दिक्षु विक्षिप्य चक्षुर्भगवानाज्ञापितवान्। एतदपि यथा तथा ज्ञास्यस्येव। तावदिय कथास्ताम्। इत्यभिदधान एव गोष्ठी भङ्क्त्वोदतिष्ठत्।

अथोत्थिते भगवति जाबालौ हारीतो मामात्मपर्णशाला नीत्वा शनै स्वशयनैकदेशे स्थापयित्वा प्राभातिकक्रियाकरणाय निर्ययौ। किन्त्वचिरात्प्रविश्याभ्यधात्। भ्रातर्वैशम्पायन दिष्ट्या वर्धसे। पितुस्ते भगवत श्वेतकेतो पादमूलात्कपिञ्जलस्त्वामेवान्विष्यन्नायात इति। अह तु तच्छ्रुत्वा कासाविति तमप्राक्षम्। स त्वकथयत्। एष तातपादमूले वर्तत इति। एव वादिन तु तमह पुनरवदम्। यद्येव तत प्रापयतु मा तत्रैव भगवान्। उत्ताम्यति मे हृदय तद्दर्शनायेति। एव वदन्नेवाग्रत कपिञ्जलमहमद्राक्षम्। दृष्ट्वा च तमवदम्। सखे कपिञ्जलैव जन्मद्वयान्तरितदर्शनमपि त्वा दृष्ट्वा किं सरभसमुत्थाय दूरत एव प्रसारितभुजद्वयो गाढालिङ्गनेन

सुखमनुभविष्यामि। किं करेणावलम्ब्यासनपरिग्रहं कारयिष्यामीति। एवमात्मानमनुशोचन्तमेव मां कपिञ्जल करद्वयेनोत्क्षिप्य मद्विरहदुःखदुर्बले वक्षसि निवेश्य चिरमरोदीत्।

तथा रुदन्तं तु तं वाङ्मात्रप्रतीकारः पुनरवदम्। सखे कपिञ्जल, अपि कुशलं तातस्य। मद्वृत्तान्तमाकर्ण्य किमुक्तवान्। कुपितो न वेति। स त्वेवमुक्तो मयाख्यातवान्। सखे कुशलं तातस्य। अयं चास्मद्वृत्तान्तः प्रथमतरमेव तातेन दिव्येन चक्षुषा दृष्टः। दृष्ट्वा च प्रतिक्रियाय कर्म प्रारब्धम्। अधुना सिद्धप्रायमेवेदम्। अद्य च प्रातरेवाहूय मामाज्ञापितवान्। वत्स कपिञ्जल, महामुनेर्जाबालेराश्रमपदं सुहृत्ते प्राप्तः, जन्मान्तरस्मरण चास्योपजातम्। तद्गच्छ संप्रति तं द्रष्टुम्। मदीयया चाशिषा नुगृह्य वक्तव्योऽसौ। वत्स यावदिदं कर्म परिसमाप्यते तावदत्रवयास्मिन्नेव जाबाले: पादमूले स्थातव्यमिति। अपि च त्वद्दुःखदुःखिताम्बा ते श्रीरपि तस्मिन्नेव कर्मणि परिचारिका वर्तते। अहमपि तत्रैव कर्मणि व्यग्रतर एव। तद्व्रजामि संप्रति। अहं तु तच्छ्रुत्वा विषण्णवदनस्तं प्रत्यवदम्। सखे कपिञ्जलेन गतं किं ब्रवीमि। सर्वं त्वमेव वेत्सीति। स त्वेवमुक्तो मया क्वाप्यदर्शनमगात्।

गते च तस्मिन्हारीतेन संवर्ध्यमानः कतिपयैरेव दिवसैः संजातपक्षोऽभवम्। उत्पन्नोत्पतनसामर्थ्यश्चैकदा महाश्वेतां द्रष्टुमुत्तरा ककुभं गृहीत्वावहम्। स्तोकमेव च गत्वा ममाङ्गानि शिथिलयितुं

कस्यचित्तरोर्मूलभाग एवावतिष्ठम् । तथास्थितश्चाध्वश्रमसुलभां निद्रामगच्छम् । चिरादिव च लब्धप्रबोधो बद्धमात्मानमनुन्मोचनीयैस्तन्तुपाशैरपश्यम् । अग्रतश्च पुरुषमद्राक्षम् । स मामुक्तवान् । महात्मन्नहं खलु जात्या चाण्डालः । मम खलु स्वामी पक्कणाधिपतिरितो नातिदूरे कृतावस्थानः । तस्य दुहिता प्रथमे वयसि वर्तते । तस्यास्त्वं केनापि कथितो यथा जाबालेराश्रमे महाश्चर्यकारी शुकस्तिष्ठति । तया च श्रुत्वोत्पन्नकौतुकात्त्वद्ग्रहणाय बहव एवापरे मादृशाः समादिष्टाः । तदद्य पुण्यैर्मयासादितोसि । तदहं तत्पादमूलं त्वां प्रापयामि । बन्धे मोक्षे चाधुना सा ते प्रभवतीति । ततः स मामादाय पक्कणाभिमुखमगच्छत् । चण्डालदारिकायै च दर्शितवान् । सा तु शोभनं कृतमिति तमभिधाय दारुपञ्जरे मामाक्षिप्यार्गलितद्वारा सा मामवदत् । यथात्र निर्वृतः संप्रति तिष्ठ । इत्यभिधाय तूष्णीमस्थात् ।

एवमतिक्रमति च काल एकदाद्राक्षमस्मिन्कनकपञ्जरे स्थितमात्मानम् । सापि चाण्डालदारिका मामादाय देवपादमूलमायाता । तत्केयं किमर्थमनया चाण्डालतात्मन स्थापिता किमर्थं वाहं बद्धो बद्धो वा किमर्थमिहानीत इत्यत्र वस्तुन्यहमपि देव इवानपगतकुतूहल एवेति ।

राजा तु तच्छ्रुत्वा तदाह्वानाय प्रतिहारीमादिदेश । नचिरा-

निपिद्धोऽपि पित्रा कामरागान्ध पितुराज्ञामुल्लङ्घ्य वधूसमीप प्रस्थित स्तदप्यनेन स्वयमेव कथितम्। तदहमस्य दुरात्मनो जननी श्री। तथा प्रस्थितमेन दिव्येन चक्षुषा दृष्ट्वास्य पिताह समादिष्टास्मि। यावदिद कर्म न परिसमाप्यते तावदेन मर्त्यलोक एव बद्ध्वा धारयेति। सर्वमधुना तत्कर्म परिसमाप्तम्। शापावसानसमयो वर्तते। तदनुभवता सप्रति द्वावपि सममेव तनू परित्यज्य यथेष्ट जनसमागमसुखम्। इत्यभिदधानैव झगिति क्षितेर्गगनमुदपतत्।

अथ राज्ञस्तद्वचनमाकर्ण्य देहमुत्सृज्य निर्भरजडा श्वासमरुत। तस्मिन्नेव चान्तरे कादम्बरी चन्द्रापीड जीवन्तमिव निर्भर कण्ठे जग्राह। चन्द्रापीडस्य तु तेनामृतसेकाह्लादिना कादम्बरीकण्ठग्रहेण सद्य सुदूरगतमपि कण्ठस्थान पुनर्जीवित प्रत्यपद्यत। उन्मीलचक्षु। अजृम्भत वदनम्। एव च सुप्तप्रतिबुद्ध इव चन्द्रापीड स्तथा कण्ठलग्ना कादम्बरीमवादीत्। भीरु, परित्यज्यता भयम्। प्रत्युज्जीवितोऽस्मि तवैवामुना कण्ठग्रहेण। तदद्य लोकश्चन्द्रलोकश्च ते द्वावप्यधुना चरणालप्रतिबद्धौ। अपि च प्रियसख्या अपि ते महाश्वेताया प्रियतमो मयैव सह विगतशाप सञ्जात। इत्यभिदधत्येव चन्द्रापीडशरीरान्तरितवपुषि चन्द्रमस्यम्बरतलादवतरन्न दृश्यत कपिञ्जलकरावलम्बी पुण्डरीक।

दृष्ट्वा च त दूरत एवोन्मुक्तचन्द्रापीडकण्ठग्रहा कादम्बरी स्वयमेव धावित्वा दत्तकण्ठग्रहा महाश्वेता पुण्डरीकागमनमशेसवेन यावन्न वर्धयति तावदवतीर्य पुण्डरीक परमोपकारिणे चन्द्रापीड

वपुषे शशाङ्कायादीकत। चन्द्रापीडस्तु त कण्ठे गृहीत्वाब्रवीत्। सखे पुण्डरीक, यद्यपि प्राग्जन्मसबधाज्जामातासि तथाप्यनन्तरजन्माहित-सुहृत्स्नेहसद्भावेनैव मया सह वर्तितव्य भवता। इत्येव च वदत्येव चन्द्रापीडे चित्ररथहसौ दिष्ट्या वर्धयितु केयूरको हेमकूटमगमत्। मदलेखापि धावमाना निर्गत्य मृत्युजयजपव्यग्रस्य तारापीडस्य विलासवत्याश्च पादयो पतित्वा देव देव्या सह दिष्ट्या वर्धसे प्रत्युज्जीवितो युवराज सम वैशम्पायनेनेत्यानन्दनिर्भरमुच्चैर्जगाद। राजा तु तच्छ्रुत्वा दोर्भ्या परिष्वज्य ता तदनु हर्षपरवशो विलासवती कण्ठेवलम्ब्य मदलेखा क्वासौ क्वासाविति पुन पुन पृच्छन्पुन पुनर्निर्विशेषहर्षवृत्ति शुकनास कण्ठे सभावयस्तत्रैवाग च्छत्। चन्द्रापीडस्तु हर्षपरवश पितरमालोक्य पृथ्वीतलनिवेशित-शिराश्चरणयोरपतत्। अथ तमुन्नमय्य तारापीडोऽभ्यधात्। पुत्र, अद्यपि पिताह तव तथापि जगद्वन्दनीयो लोकपालस्त्वमिति। विलासवती तु त गाढतर सुचिरमालिलिङ्ग। उन्मुक्तश्च मात्रोप-सृत्य शुकनास प्रणनाम। आशी सहस्राभिवर्धितश्च तेनात्मनोपसृत्य यथानुक्रम पित्रो शुकनासस्य मनोरमायाश्चैप वो वैशम्पायन इति पुण्डरीकमदर्शयत्।

तस्मिन्नेव च प्रस्तावे समुपसृत्य कपिञ्जल शुकनासमब्रा-दीत्। एव सदिष्टमार्यस्य भगवता श्वेतकेतुना। अय खलु पुण्डरीक सवर्धित एव केवल मया। आत्मज पुनस्तवेति। शुकनासस्तु विनयावनत पुण्डरीक पाणिनासेवलम्ब्य कपिञ्जल प्रत्यवादीत्।

कपिञ्जल, सकलजगदाशयज्ञेन सता भगवता किमित्यादिष्टम् । सर्वथा स्नेहन्यायमसन्तोष । इत्येवंविधैर्व्यालापै सा क्षणदा प्रभाता। प्रातरेव च सम मदिरागौरीभ्या चित्ररथहंसौ गन्धर्वराजावपि तत्रैवा जग्मतु । आगतयोश्च तयो सहस्रगुण इव महोत्सव प्रावर्तत।

ततश्चित्ररथो राजर्षेस्तारापीडस्याज्ञया चन्द्रापीडमादाय हेमकूटमगात्। गत्वा च चित्ररथ कादम्बर्या सह समग्रमेव स्व राज्य चन्द्रापीडाय न्यवेदयत्। पुण्डरीकायापि सम महाश्वेतया निजपद हस । अन्यदा कादम्बरी वासभवनगत चन्द्रापीडमप्राक्षीत्। आर्यपुत्र, सर्वे खलु वय मृता सन्त प्रत्युज्जीविता परस्पर सघटिताश्च। सा पुनर्वराकी पत्रलेखास्माक मध्ये न दृश्यते। न विद्म किं तस्या वृत्तमिति। चन्द्रापीडमूर्तिश्चन्द्रमास्तच्छ्रुत्वा ता प्रत्यवादीत् । प्रिये, कुतोऽत्र। सा हि खलु रोहिणी शप्त मामुपश्रुत्य मच्चरणपरिच र्यायै मर्त्यलोके जन्माग्रहीत्। इतश्च जन्मान्तर गच्छता मया मद्दुपरमसमुन्मुक्तशरीरा पुनरपि मर्त्यलोकमवतरन्ती बलादाकृष्या स्वलोक विसर्जिता। तत्र पुनस्ता द्रक्ष्यसीति। कादम्बरी तु तच्छ्रुत्वा रोहिण्यास्तयोदारतया स्नेहलतया च विस्मितहृदया पर लज्जिता न किंचिदपि वक्तु शशाक। एव चन्द्रापीडो दशरात्र स्थित्वा परितुष्टहृदयाभ्या श्वशुराभ्या विसर्जित पितु पादमूल माजगाम।

आगत्य च समकालमेवानुभूतक्लेश राज्येष्वमात्यसम कृत्वा समारोपितराज्यभार पुण्डरीके मित्रे पादावनुचरन्कानि

सुरभिनिशां कदाचिद्धेमकूटे कदाचिच्चन्द्रलोके कदाचिल्लक्ष्मीनिवास सरसि कादम्बरीरुच्या च सर्वत्रैवापरेष्वपि रम्यतरेषु तेषु तेषु स्थानेषु तया सह अन्मट्टयाकाक्षयैवापरिसमाप्तान्यपुनरुक्तानि च तानि तानि न केवलं चन्द्रमा कादम्बर्यां सह कादम्बरी महाश्वेतया सह महाश्वेता तु पुण्डरीकेण सह पुण्डरीकोऽपि चन्द्रमसा सह परस्परावियोगेन सर्वे एव सर्वकालं सुखान्यनुभवन्त परां कोटिमानन्दस्याध्यगच्छन् ।

=रात्रि– night P 110 पर्यंक m –मञ्च m =शय्या f –a sofa, a bed पीठिका f=पीठ n =फलक m a bench P 111 सौध n =प्रासाद m a palace P 112 स्कन्धावार m –सैन्य n –सेना f –an army. स्मर m =कामदेव =The god of love P 115 अनु सकलित=अज्ञात, अनवगत। P 117 आक्षिप्य–having objected to ऊष्मन् n =उष्णता f –दाह m heat P 118 प्रतिबन्ध m –संयोग m –सम्बन्ध m –A connection संविधान n. –रचना f –arrangement P 119 वचनीयता f –निन्दा f censure रूक्ष–परुष–harsh त्रपा f –लज्जा f. P 124 कपोल m A cheek अवष्टम्भ m –धैर्य n –व्यवसाय m –Courage, an effort P. 126 उद्+तम् 4P (3per. sing. उत्ताम्यति) to be impatient P 127 ककुभ् f –दिश्–दिशा f –The direction, quarter P 128 पक्कण or पक्वण m the hut of a savage or barbarian–चण्डालवसति । P 130 ढौक 1 st conj A To approach

---

विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं
पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया ।
यः साक्षात्कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥

शुभं भूयादध्येतॄणामध्यापकानां च। शिवस्त्वेषां शिवाय भवतु।

दुज्जयिन्यां कदाचिद्धेमकूटे कदाचिच्चन्द्रलोके कदाचिल्लक्ष्मीनिवास सरसि कादम्बरीरुच्या च सर्वत्रैवापरेष्वपि रम्यतरेषु तेषु तेषु स्थानेषु तया सह जन्मद्वयाकाङ्क्षयैवापरिसमाप्तान्यपुनरुक्तानि च तानि तानि न केवलं चन्द्रमा कादम्बर्या सह कादम्बरी महाश्वेतया सह महाश्वेता तु पुण्डरीकेण सह पुण्डरीकोऽपि चन्द्रमसा सह परस्परावियोगेन सर्वे एव सर्वकालं सुखान्यनुभवन्तः परां कोटिमानन्दस्याध्यगच्छन् ।

---

Notes —P 99 पाकशासन m =इन्द्र m परिगत=परिवृत Surrounded आस्थानमण्डप m =आस्थाननिकेतन n an assembly hall पाण्डुर=श्वेत-white, whitish, yellowish करक m A small box P 100 कार्त्स्न्य n अखिलत्व n entirety, totality शकुनि m =पक्षिन् m । शकल m n =खण्ड m n A piece, a part शबर m =किरात m =जांगल m - A barbarian, a savage P 101 पिशित n =मांस n flesh शिरोधरा f =ग्रीवा f the neck विप्रकीर्ण=असंहत, विश्लिष्ट -scattered P 103 आमंथरम्=आमन्दम्-slowly but gravely P 106 मञ्जरी f =किसलय m n =प्ररोह m a sprout तरल=चञ्चल । कुसुमधन्वन् m -कुसुमशर m =कुसुमकार्मुक m =अनंग m -कामदेव m । पुलक m =उद्धर्षण n - रोमांच m Erection of hairs of the body व्यतिकर m =प्रसंग m =घटना f an incident उपप्लव m =उत्पात m - आपद्-सम्पात m a calamity, danger P 107 अपरान्तरक्षम -brooking no delay P 108 क्षमा f -सहनशक्ति

=रात्रि– night P 110 पर्यंक m –मञ्च m =शय्या f – a sofa, a bed पीठिका f =पीठ n =फलक m a bench P 111 सौध n =प्रासाद m a palace P. 112 स्कन्धावार m –सैन्य n –सेना f – an army. स्मर m =कामदेव =The god of love P 115 अनुपलक्षित=अज्ञात, अनवगत। P 117 आक्षिप्य-having objected to ऊष्मन् n =उष्णता f –दाह m heat P 118 प्रतिबन्ध m –संयोग m –सम्बन्ध m –A connection सन्निधान n. –रचना f – arrangement P 119 वचनीयता f –निन्दा f censure रूक्ष-परुष-harsh त्रपा f –लज्जा f. P 124 कपोल m A cheek अवष्टम्भ m –धैर्य n –व्यवसाय m –Courage, an effort P, 126 उद्-तम् 4P (3per. sing. उत्ताम्यति) to be impatient P 127 ककुभ f –दिश्-दिशा f –The direction, quarter P 128 पक्कण or पक्कण m the hut of a savage or barbarian-चण्डालवसति। P 130 ढौक 1 st conj A To approach

---

विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं
पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया ।
यः साक्षात्कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥

शुभं भूयादध्येतॄणामध्यापकानां च । [illegible] शिवाय भवतु ।

# ERRATA.

The letters dropped or misprinted arc in black type.

| Page. | Line. | Read |
|---|---|---|
| 10. | 20 | पण्डित |
| 21. | 12. | सिंघासन |
| 23 | 13. | राजा |
| 41. | 17. | मांचेष्टितं |
| 46. | 12. | दुर्यो॰ |
| 53. | 2 | बाणावणचवि |
| 56. | 1. | नामधन्य: |
| 61. | 2. | मूलको |
| 64. | 2. | प्रत्यक्षदर्या |
| 66. | 11. | योग्य |
| 71. | 22. | ततो |
| 72. | 11. | देवि |
| 80. | 11. | सत्त्वः |
| 84. | 9. | प्रणम |
| 87. | 8. | हचि |
| 99. | 2. | शुद्ध॰ |
| 100. | 6. | रश्मी |
| 103. | 11. | पस्तुप |
| 107. | 10. | ग्यगुप |
| 109. | 12. | तृष्णी |
| ,, | 21. | दशा |
| 116. | 20. | तथैव |
| 123. | 20. | विलार |
| 125. | 18. | प्रसन्न |
| 127. | 8. | प्रतिनि |



# ERRATA.

The letters dropped or misprinted are given in black type

| Page. | Line. | Read |
|---|---|---|
| 10. | 20 | पण्डित |
| 21. | 12. | सद्यागासन |
| 23 | 13. | राजा |
| 41. | 17. | मावेष्टितं |
| 46. | 12. | दुर्यो॰ |
| 53. | 2. | प्राणत्राणत्वपि |
| 56. | 1. | नामद्वन्य: |
| 61. | 2. | मुल्को |
| 64. | 2. | प्रत्यक्षरश्च |
| 66 | 14. | योग्य: |
| 71. | 22. | ततो |
| 72 | 11. | रैवि |
| 80. | 11. | तत: |
| 84. | 9. | मप्राप्तसुख: |
| 87. | 8. | हवि: |
| 99. | 2. | शूद्रक |
| 100. | 6. | रब्रवीत् |
| 103. | 11. | सद्गुपसर्पेश |
| 107. | 10. | न्यनुबध्नाति |
| 109. | 12 | तूष्णी |
| ,, | 21. | दृष्ट्वा |
| 116. | 20. | तथैव |
| 123. | 20. | विलासवती |
| 125. | 18. | त्नुरनात |
| 127. | 8 | प्रतिक्रियार्थे |

